पञ्चाशद्वाथ षट्त्रिंशत् पञ्चविंशति रप्यथ ॥ ४१ ॥
ततः साम्वत्सरप्रोक्ते शुभे लग्ने सुशोभने ।
वेदशब्दैश्च गान्धर्वैर्वाद्यैश्च विविधैः पुनः ॥ ४२ ॥
कनकालङ्कृतां कृत्वा जले गामवतारयेत् ।
सामगाय च सा देया ब्राह्मणाय विशाम्पते ! ॥ ४३ ॥
पात्रीमादाय सौवर्णीं पञ्चरत्नसमन्विताम् ।
ततो निक्षिप्य मकरमत्स्यादींश्चैव सर्वशः ।
धृतां चतुर्विधैर्विप्रैर्वेदवेदाङ्गपारगैः ॥ ४४ ॥
महानदीजलोपेतां दध्यक्षतसमन्विताम् ।
उत्तराभिमुखीं धेनुं जलमध्ये तु कारयेत् ॥ ४५ ॥
आथर्वणेन संस्नातां पुनर्मामित्यथेति च ।
आपोहिष्ठेति मन्त्रेण क्षिप्रागत्य च मण्डलम् ॥ ४६ ॥
पूजयित्वा सदस्यांश्च बलिं दद्यात् समन्ततः ।
पुनर्दिनानि होतव्यं चत्वारि मुनिसत्तमाः ! ॥ ४७ ॥
चतुर्थी कर्म कर्तव्यं देया तत्रापि शक्तितः ।
दक्षिणा राजशार्दूल ! वरुणक्षापनं ततः ॥ ४८ ॥
कृत्वा तु यज्ञपात्राणि यज्ञोपकरणानि च ।
ऋत्विग्भ्यस्तु समं दत्त्वा मण्डपं विभजेत् पुनः ।
हेमपात्रीञ्च शय्याञ्च स्थापकाय निवेदयेत् ॥ ४९ ॥
ततः सहस्रं विप्राणामथ वाष्टशतं तथा ।
भोजनीयं यथाशक्ति पञ्चाशद्वाथ विंशतिः ।
एवमेषु पुराणेषु तडागविधिरुच्यते ॥ ५० ॥
कूपवापीषु सर्वासु तथा पुष्करिणीषु च ।
एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव ॥ ५१ ॥

मन्त्रतस्तु विशेषः स्यात् प्रसादोद्यानभूमिषु ।
अयन्त्वशक्तावर्द्धेन विधिर्दृष्टः स्वयम्भुवा ।
अल्पेष्वेकाग्निवत् कृत्वा वित्तशाठ्याहते नृणाम् ॥५२॥
प्रावृट्काले स्थिते तोये ह्यग्निष्टोमफलं स्मृतम् ।
शरत्काले स्थितं यत् स्यात् तदुक्तफलदायकम् ।
वाजपेयातिरात्राभ्यां हेमन्ते शिशिरे स्थितम् ॥५३॥
अश्वमेधसमं प्राह वसन्तसमये स्थितम् ।
ग्रीष्मेऽपि तत् स्थितन्तोयं राजसूयाद्विशिष्यते ॥५४॥
एतान्महाराज! विशेषधर्मान् करोति योऽव्यागमशुद्धबुद्धिः ।
स याति रुद्रालयमाशु पूतः कल्पाननेकान् दिवि मोदते च ॥५५॥
अनेकलोकान् समहस्तमादीन् भुक्त्वा परार्द्धद्वयमङ्गनाभिः ।
सहैव विष्णोः परमम्पदं यत् प्राप्नोति तद्यागफलेन भूयः ॥५६॥

---

अथोनषष्टितमोऽध्यायः ।

ऋषय ऊचुः । पादपानां विधिं सूत ! यथावद्विस्तराद्वद ।
विधिना केन कर्त्तव्यं पादपोद्यापनं बुधैः ।
ये च लोकाः स्मृतास्तेषान्तानिदानीं वदस्व नः ॥१॥
सूत उवाच । पादपानां विधिं वक्ष्ये तथैवोद्यानभूमिषु ।
तडागविधिवत् सर्वमासाद्य जगदीश्वर ! ॥२॥
ऋत्विङ्मण्डपसम्भारस्त्वाचार्य्यश्चैव तद्विधः ।
पूजयेत् ब्राह्मणांस्तद्वद्धेमवस्त्रानुलेपनैः ॥३॥
सर्व्वौषध्युदकैः सिक्तान् पिष्टातकविभूषितान् ।
वृक्षान्माल्यैरलङ्कृत्य वासोभि रभिवेष्टयेत् ॥४॥
सूच्या सौवर्णया कार्य्यं सर्व्वेषां कर्णवेधनम् ।

अञ्जनञ्चापि दातव्यं तद्वद्धेमशलाकया ॥ ५ ॥
फलानि सप्त चाष्टौ वा कालधौतानि कारयेत्।
प्रत्येकं सर्ववृक्षाणां वेद्यान्ताम्यधिवासयेत् ॥ ६ ॥
धूपोऽत्र गुग्गुलः श्रेष्ठः ताम्रपात्रैरधिष्ठितान्।
सर्वान्धान्यस्थितान् कृत्वा वस्त्रगन्धानुलेपनैः ॥ ७ ॥
कुम्भान् सर्वेषु वृक्षेषु स्थापयित्वा नरेश्वर !।
सहिरण्यानशेषांस्तान् कृत्वा बलिनिवेदनम् ॥८॥
यथास्वं लोकपालानामिन्द्रादीनां विशेषतः।
वनस्पतेश्च विद्वद्भिर्होमः कार्यो द्विजातिभिः ॥ ९ ॥
ततः शुक्लाम्बरधरां सौवर्णकृतभूषणाम्।
सकांस्यदोहां सौवर्णशृङ्गाभ्यामतिशालिनीम्।
पयस्विनीं वृक्षमध्यादुत्सृजेत् गामुदङ्मुखीम् ॥१०॥
ततोऽभिषेकमन्त्रेण वाद्यमङ्गलगीतकैः।
ऋग्यजुःसाममन्त्रैश्च वारुणैरभितस्तथा।
तैरेव कुम्भैः स्नपनं कुर्यात् ब्राह्मणपुङ्गवः ॥ ११ ॥
स्नातः शुक्लाम्बर स्तद्वद्यजमानोऽभिपूजयेत्।
गोभिर्विभवतः सर्वान् ऋत्विजस्तान् समाहितः ॥१२॥
हेमसूत्रैः सकटकैरङ्गुलीयपवित्रकैः।
वासोभिः शयनीयैश्च तथोपस्करपादुकैः।
क्षीरेण भोजनं दद्याद्यावद्दिनचतुष्टयम् ॥ १३ ॥
होमश्च सर्षपैः कार्यो यवैः कृष्णतिलैस्तथा।
पलाशसमिधः शस्तास्तुर्येऽह्नि तथोत्सवः।
दक्षिणा च पुनस्तद्वद्देया तत्रापि शक्तितः ॥ १४ ॥
यद्यदिष्टतमं किञ्चित् तत्तत् दद्यादमत्सरी।

आचार्यं द्विगुणं दद्यात्प्रणिपत्य विसर्जयेत् ॥ १५ ॥
अनेन विधिना यस्तु कुर्यात् द्रुमोत्सवं बुधः ।
सर्वान् कामानवाप्नोति फलञ्चानन्त्यमश्नुते ॥ १६ ॥
यश्चैकमपि राजेन्द्र ! द्रुमं संस्थापयेन्नरः ।
सोऽपि स्वर्गे वसेद्राजन् ! यावदिन्द्रायुतत्रयम् ॥१७ ॥
भूतान् भव्यांश्च मनुजांस्तारयेद्द्रुमसंमितान् ।
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ॥ १८ ॥
य इदं शृणुयान्नित्यं श्रावयेद्वापि मानवः ।
सोऽपि संपूजितो देवैर्ब्रह्मलोके महीयते ॥ १९ ॥

---

अथ षष्टितमोऽध्यायः ।

मत्स्य उवाच । तथैवान्यत् प्रवक्ष्यामि सर्वकामफलप्रदम् ।
सौभाग्यशयनं नाम यत्पुराणविदो विदुः ॥ १ ॥
पुरा दग्धेषु लोकेषु भूर्भुवःस्वर्महादिषु ।
सौभाग्यं सर्वभूताना मेकस्थमभवत्तदा ।
वैकुण्ठं स्वर्गमासाद्य विष्णोर्वक्षःस्थलस्थितम् ॥ २ ॥
ततः कालेन महता पुनः सर्गविधौ नृप ! ।
अहङ्कारावृते लोके प्रधानपुरुषान्विते ॥ ३ ॥
स्पर्धायाञ्च प्रवृत्तायां कमलासनकृष्णयोः ।
लिङ्गाकारा समुद्भूता वह्नेर्ज्वालातिभीषणा ।
तयाभितप्तस्य हरेर्वक्षस्तद्विनिःसृतम् ॥ ४ ॥
वक्षःस्थलं समाश्रित्य विष्णोः सौभाग्यमास्थितम् ।
रसरूपमतो यावत् प्राप्नोति वसुधातलम् ॥ ५ ॥
उत्क्षिप्तमन्तरिक्षे तद्ब्रह्मपुत्रेण धीमता ।

दक्षेण पीतमात्रन्तद्रूपलावण्यकारकम् ॥ ६ ॥
बलं तेजो महज्जातं दक्षस्य परमेष्ठिनः।
शेषं यदपतद्भूमावष्टधा समजायत ॥ ७ ॥
ततो जनानां सञ्जाताः सप्त सौभाग्यदायकाः।
इक्षवो रसराजाश्च निष्पावाजाजिधान्यकम् ॥ ८ ॥
विकारवच्च गोक्षीरं कुसुम्भं कुङ्कुमं तथा।
लवणं चाष्टमन्तद्वत् सौभाग्याष्टकमुच्यते ॥ ९ ॥
पीतं यद् ब्रह्मपुत्रेण योगज्ञानविदा पुनः।
दुहिता साभवत्तस्य या सतीत्यभिधीयते ॥ १० ॥
लोकानतीत्य लालित्यात् ललिता तेन चोच्यते।
त्रैलोक्यसुन्दरीमेनामुपयेमे पिनाकधृक् ॥ ११ ॥
या देवी सौभाग्यमयी भुक्तिमुक्तिफलप्रदा।
तामाराध्य पुमान् भक्त्या नारी वा किन्न विन्दति ॥१२॥
मनुरुवाच। कथमाराधनं तस्या जगद्धात्र्या जनार्दन !।
तद्विधानं जगन्नाथ ! तत् सर्वञ्च वदस्व मे ॥ १३ ॥
मत्स्य उवाच। वसन्तमासमासाद्य तृतीयायां जनप्रिय !।
शुक्लपक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत् ॥ १४ ॥
तस्मिन्नहनि सा देवी किल विश्वात्मना सती।
पाणिग्रहणकैर्मन्त्रैरुवसद्वरवर्णिनी ॥ १५ ॥
तया सहैव देवेशं तृतीयायामथार्चयेत्।
फलैर्नानाविधैर्धूपैर्दीपनैवेद्यसंयुतैः ॥ १६ ॥
प्रतिमां पञ्चगव्येन तथा गन्धोदकेन तु।
स्नापयित्वार्चयेत् गौरीमिन्दुशेखरसंयुताम् ॥ १७ ॥

नमोऽस्तु पाटलायै तु पादौ देव्याः शिवस्य तु ।
शिवायेति च संकीर्त्य जयायै गुल्फयोर्द्वयोः ॥ १८ ॥
त्रिगुणायेति रुद्राय भवान्यै जङ्घयोर्युगम् ।
शिवां रुद्रेश्वरायै च विजयायेति जानुनी ।
सङ्कीर्त्य हरिकेशाय तथोरू वरदे नमः ॥ १९ ॥
ईशायै च कटिं देव्याः शङ्करायेति शङ्करम् ।
कुक्षिद्वयञ्च कोटव्यै शूलिने शूलपाणये ॥ २० ॥
मङ्गलायै नमस्तुभ्यमुदरं चाभि पूजयेत् ।
सर्वात्मने नमो रुद्रमैशान्यै च कुचद्वयम् ॥ २१ ॥
शिवं वेदात्मने तद्वद्रुद्राण्यै कण्ठमर्चयेत् ।
त्रिपुरघ्नाय विश्वेशमनन्तायै करद्वयम् ॥ २२ ॥
त्रिलोचनाय च हरं बाहुकालानलप्रिये ।
सौभाग्यभवनायेति भूषणानि सदार्चयेत् ।
स्वाहा स्वधायै च मुखमीश्वरायेति शूलिनम् ॥ २३ ॥
अशोकमधुवासिन्यै पूज्या वोष्ठौ च भूतिदौ ।
स्थाणवे तु हरं तद्वदास्यं चन्द्रमुखप्रिये ॥ २४ ॥
नमोऽर्द्धनारीशहरमसिताङ्गीति नासिकाम् ।
नम उग्राय लोकेशं ललितेति पुनर्भ्रुवौ ॥ २५ ॥
शर्वाय पुरहन्तारं वा सव्येतु तथालकाम् ।
नमः श्रीकण्ठनाथायै शिवकेशांस्ततोऽर्चयेत् ।
भीमोग्रसमरूपिण्यै शिरः सर्वात्मने नमः ॥ २६ ॥
शिवमभ्यर्च्य विधिवत्सौभाग्याष्टकमग्रतः ।
स्थापयेद् घृतनिष्पावकुसुम्भक्षीरजीरकान् ॥ २७ ॥
रसराजञ्च लवणं कस्तुम्ब च मथाष्टकम् ।

दत्तं सौभाग्यमित्यस्मात् सौभाग्याष्टकमित्यतः ॥२८॥
एवं निवेद्य तत्सर्वमग्रतः शिवयोः पुनः।
रात्रौ शृङ्गोदकं प्राश्य तद्वद् भूमावरिन्दम! ॥२९॥
पुनः प्रभाते तु तथा कृतस्नानजपः शुचिः।
संपूज्य द्विजदाम्पत्यं वस्त्रमाल्यविभूषणैः ॥ ३० ॥
सौभाग्याष्टकसंयुक्तं सुवर्णचरणद्वयम्।
प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत् ॥ ३१ ॥
एवं सम्वत्सरं यावत्तृतीयायां सदामनो!।
कर्त्तव्यं विधिवद् भक्त्या सर्वसौभाग्यमीप्सुभिः ॥३२
प्राशने दानमन्त्रे च विशेषोऽयन्निबोध मे।
शृङ्गोदकञ्चैत्रमासे वैशाखे गोमयं पुनः ॥ ३३ ॥
ज्यैष्ठे मन्दारकुसुमं विल्वपत्रं शुचेः स्मृतम्।
श्रावणे दधि सम्प्राश्यं नभस्ये च कुशोदकम्।
क्षीरमाश्वयुजि मासि कार्त्तिके पृषदाज्यकम्।
मार्गे मासे तु गोमूत्रं पौषे संप्राशयेद् घृतम् ॥ ३५ ॥
माघे कृष्णतिलं तद्वत् पञ्चगव्यञ्च फाल्गुने।
ललिता विजया भद्रा भवानी कुमुदा शिवा ॥ ३६ ॥
वासुदेवी तथा गौरी मङ्गला कमला सती।
उमा च दानकाले तु प्रीयतामिति कीर्त्तयेत् ॥३७॥
मल्लिकाशोककमलं कदम्बोत्पलमालतीः।
कुब्जकं करवीरञ्च वाणम्लानकुङ्कुमम् ॥ ३८ ॥
सिन्दुवारञ्च सर्वेषु मासेषु क्रमशः स्मृतम्।
जपाकुसुम्भकुसुमं मालती शतपत्रिका ॥ ३९ ॥
यथालाभं प्रशस्तानि करवीरञ्च सर्वदा।

एवं सम्वत्सरं यावदुपोष्य विधिवन्नरः ॥ ४० ॥
स्त्रीभक्ता वा कुमारी वा शिवमभ्यर्च्य भक्तितः ।
व्रतान्ते शयनं दद्यात् सर्वोपस्करसंयुतम् ॥ ४१ ॥
उमा महेश्वरं हैमं वृषभञ्च गवा सह ।
स्थापयित्वाथ शयने ब्राह्मणाय निवेदयेत् ॥ ४२ ॥
अन्यान्यपि यथाशक्त्या मिथुनान्यम्बरादिभिः ।
धान्यालङ्कारगोदानैरभ्यर्चेद्धनसञ्चयैः ।
वित्तशाठ्येन रहितः पूजयेत् गतविस्मयः ॥ ४३ ॥
एवं करोति यः सम्यक् सौभाग्यशयनव्रतम् ।
सर्वान् कामानवाप्नोति पदमत्यन्तमश्नुते ।
फलस्यैकस्य त्यागेन व्रतमेतत्समाचरेत् ॥ ४४ ॥
य इच्छन् कीर्तिमाप्नोति प्रतिमासं नराधिपः ।
सौभाग्यारोग्यरूपायुर्वस्त्रालङ्कारभूषणैः ।
न वियुक्तो भवेद्राजन् ! नवार्बुदशतत्रयम् ॥ ४५ ॥
यस्तु द्वादश वर्षाणि सौभाग्यशयनव्रतम् ।
करोति सप्त चाष्टौ वा श्रीकण्ठभवनेऽमरैः ।
पूज्यमानो वसेत् सम्यक् यावत्कल्पायुतत्रयम् ॥४६॥
नारी वा कुरुते वापि कुमारी वा नरेश्वर ! ।
सापि तत्फलमाप्नोति देव्यनुग्रहलालिता ॥४७॥
शृणुयादपि यश्चैव प्रदद्यादथ वा मतिम् ।
सोऽपि विद्याधरो भूत्वा स्वर्गलोके चिरं वसेत् ॥४८॥
इदमिह मदनेन पूर्वमिष्टं शतधनुषा कृतवीर्यसूनुना च ।
कृतमथ वरुणेन नन्दिना वा किमु जननाथ ततो यदुद्भवः स्यात्४९

---

## अथ षष्टितमोऽध्यायः।

नारद उवाच। भूर्लोकोऽथ भुवर्लोकः स्वर्लोकोऽथ महर्जनः।

तपः सत्यञ्च सप्तैते देवलोकाः प्रकीर्तिताः॥ १॥

पर्यायेण तु सर्वेषामाधिपत्यं कथं भवेत्।

इह लोके शुभं रूपमायुः सौभाग्यमेव च।

लक्ष्मीश्च विपुला नाथ! कथं स्यात् पुरसूदन! ॥२॥

पुरा हुताशनः सार्द्धं मारुतेन महीतले।

आदिष्टः पुरुहूतेन विनाशाय सुरद्विषाम्॥ ३॥

निर्दग्धेषु ततस्तेन दानवेषु सहस्रशः।

तारकः कमलाक्षश्च कालदंष्ट्रः परावसुः।

विरोचनश्च संग्रामादपलायंस्तपोधन! ॥ ४॥

अम्भः सामुद्रमाविश्य सन्निवेशमकुर्वत।

अशक्या इति तेऽप्यग्निमारुताभ्या मुपेक्षिताः॥ ५॥

ततः प्रभृति ते देवान् मनुष्यान् सह पन्नगान्।

संपीड्य च मुनीन् सर्वान् प्रविशन्ति पुनर्जलम्॥ ६॥

एवं वर्षसहस्राणि वीराः पञ्च च सप्त च।

जलदुर्गबलाद्ब्रह्मन्! पीडयन्ति जगत्त्रयम्॥ ७॥

ततः परमथो वह्निमारुतावमराधिपः।

आदिदेशाचिरादम्बु निधिरेष विशोष्यताम्॥ ८॥

यस्मादस्मद्द्विषामेष शरणं वरुणालयः।

तस्माद्भवद्भ्यामद्यैव क्षयमेष प्रणीयताम्॥ ९॥

तावूचतुस्ततः शक्रमुभौ शम्बरसूदनम्।

अधर्म्म एष देवेन्द्र! सागरस्य विनाशनम्॥ १०॥

यस्माज्जीवनिकायस्य महतः संक्षयो भवेत्।

तस्मान्न पापमद्यावां कुर्वावः पुरन्दर! ॥ ११॥

यस्य योजनमात्रेऽपि जीवकोटिशतानि च ।
निवसन्ति सुरश्रेष्ठ ! स कथं नाशमर्हति ॥ १२ ॥
एवमुक्तः सुरेन्द्रस्तु कोपात् संरक्तलोचनः ।
उवाचेदं वचो रोषान्निर्दहन्निव पावकम् ॥ १३ ॥
न धर्माधर्मसंयोगं प्राप्नुवन्त्यमराः क्वचित् ।
भवतस्तु विशेषेण माहात्म्यं ह्यधितिष्ठति ॥ १४ ॥
महात्मा लङ्घनं यस्मान्मारुतेन समं त्वया ।
मुनिव्रतमहिंसादि परित्यज्य त्वया कृतम् ।
धर्मार्थशास्त्ररहितं मत्तं प्रति विभावसो ! ॥ १५ ॥
तस्मादेकेन वपुषा मुनिरूपेण मानुषे ।
मारुतेन समं लोके तव जन्म भविष्यति ॥ १६ ॥
यदा च मानुषत्वेऽपि त्वयागस्त्येन शोषितः ।
भविष्यत्युदधिर्वह्ने ! तदा देवत्वमाप्स्यसि ॥ १७ ॥
इतीन्द्रशापात् पतितौ तत्क्षणात्तौ महीतले ।
अवापावेकदेहेन कुम्भाज्जन्म तपोधन ! ॥ १८ ॥
मित्रावरुणयोर्वीर्याद्वसिष्ठस्यानुजोऽभवत् ।
अगस्त्य इत्युग्रतपाः सम्बभूव पुनर्मुनिः ॥ १९ ॥
नारद उवाच । सम्भूतः स कथं भ्राता वसिष्ठस्याभवन्मुनिः
कथञ्च मित्रावरुणौ पितरावस्य तौ स्मृतौ ।
जन्म कुम्भादगस्त्यस्य कथं स्यात् पुरसूदन ! ॥ २० ॥
ईश्वर उवाच । पुरा पुराणपुरुषः कदाचिद् गन्धमादने ।
भूत्वा धर्मसुतो विष्णुश्चचार विपुलन्तपः ॥ २१ ॥
तपसा तस्य भीतेन विघ्नार्थं प्रेषितावुभौ ।
शक्रेण माधवानङ्गावप्सरोगणसंयुतौ ॥ २२

तदा तद्गीतवाद्येन नाट्यरागादिना हरिः।
न काममाधवाभ्याञ्च विषयान् प्रतिशुश्रुभे ॥ २३ ॥
तदा काममधुस्त्रीणां विषादमगमद्गणः।
संक्षोभाय ततस्तेषां स्वोरुदेशान्नराग्रजः।
नारीमुत्पादयामास स लोकजनमोहिनीम् ॥२४॥
संक्षुब्धास्तु तया देवास्तौ तु देववरावुभौ।
अप्सरोभिः समक्षं हि देवानामब्रवीद्धरिः ॥ २५ ॥
अप्सरा इति सामान्याद्देवानामब्रवीद्धरिः।
उर्वशीति च नाम्नेयं लोके ख्यातिं गमिष्यति ॥ २६ ॥
ततः कामयमानेन मित्रेणाहूय सोर्वशी।
उक्ता मां रमयस्वेति बाढमित्यब्रवीत्तु सा ॥ २७ ॥
गच्छन्ती चाम्बरं तद्वत् स्तोकमिन्दीवरेक्षणा।
वरुणेन धृता पश्चात् वरुणं नाभ्यनन्दत ॥ २८ ॥
मित्रेणाहं वृता पूर्वमद्य भार्या न ते विभो!।
उवाच वरुणश्चित्तं मयि सन्न्यस्य गम्यताम् ॥ २९ ॥
गतायां बाढमित्युक्ता मित्रः शापमदात्तदा।
तस्यै मानुषलोके त्वं गच्छ सोमसुतात्मजम् ॥ ३० ॥
भजस्वेति यतोवेश्या धर्म्म एष त्वया कृतः।
जलकुम्भे ततो वीर्यं मित्रेण वरुणेन च।
प्रक्षिप्त मथसञ्जातौ द्वावेव मुनिसत्तमौ ॥ ३१ ॥
निमिर्नाम सह स्त्रीभिः पुरा द्यूतमदीव्यत।
तत्रान्तरे ह्याजगाम वसिष्ठो ब्रह्मसम्भवः ॥ ३२ ॥
तस्य पूजामकुर्वंस्तं शशाप स मुनिर्नृपम्।
विदेहस्त्वं भवस्वेति ततस्तेनाप्यसौ मुनिः ॥ ३३ ॥

अन्योन्यशापाच्च तयोर्विगते इव चेतसी ।
जग्मतुः शापमानाय ब्रह्माणं जगतः पतिम् ॥ २४ ॥
अथ ब्रह्मण आदेशान्मोघनेष्ववसन्निमिः ।
निमेषाः स्युश्च लोकानां तद्विश्रामाय नारद ! ॥ २५ ॥
वसिष्ठोऽप्यभवत्तस्मिन् जलकुम्भे च पूर्ववत् ।
ततः स्थितश्चतुर्बाहुः साक्षसूत्रकमण्डलुः ।
अगस्त्य इति शान्तात्मा बभूव ऋषिसत्तमः ॥ २६ ॥
मलयस्यैकदेशे तु वैखानसविधानतः ।
सभार्यः संवृतो विप्रैस्तपश्चक्रे सुदुश्चरम् ॥ २७ ॥
ततः कालेन महता तारकादतिपीडितम् ।
जगद्वीक्ष्य स कोपेन पीतवान्वरुणालयम् ॥ २८ ॥
ततोऽस्य वरदाः सर्वे बभूवुः शङ्करादयः ।
ब्रह्मा विष्णुश्च भगवान् वरदानाय जग्मतुः ।
वरं वृणीष्व भद्रन्ते यदभीष्टञ्च वै मुने ! ॥ ३९ ॥
अगस्त्य उवाच । यावद् ब्रह्मसहस्राणां पञ्चविंशतिकोटयः ।
वैमानिको भविष्यामि दक्षिणाचलवर्त्मनि ॥ ४० ॥
मद्विमानोदये कुर्याद्यः कश्चित् पूजनं मम ।
स सप्तलोकाधिपतिः पर्यायेण भविष्यति ॥ ४१ ॥
ईश्वर उवाच । एवमस्त्विति तेऽप्युक्त्वा जग्मुर्देवा यथागतम् ।
तस्मादर्घः प्रदातव्यो ह्यगस्त्यस्य सदा बुधैः ॥ ४२ ॥
नारद उवाच । कथमर्घप्रदानन्तु कर्तव्यं तस्य वै विभो ! ।
विधानं यदगस्त्यस्य पूजने तद्वदस्व मे ॥ ४३ ॥
ईश्वर उवाच । प्रत्यूषसमये विद्वान् कुर्यादस्योदये निशि ।
स्नानं शुक्लतिलैस्तद्वत् शुक्लमाल्याम्बरो गृही ॥ ४४ ॥

स्नापयेदव्रणं कुम्भं माल्यवस्त्रविभूषितम्।
पञ्चरत्नसमायुक्तं घृतपात्रसमन्वितम्॥ ४५॥
अङ्गुष्ठमात्रं पुरुषं तथैव सौवर्णमेवायतबाहुदण्डम्।
चतुर्मुखं कुम्भमुखे निधाय धान्यानि सप्ताम्बरसंयुतानि॥४६
सकांस्यपात्राक्षतशुक्तियुक्तं मन्त्रेण दद्यात् द्विजपुङ्गवाय।
उत्क्षिप्य लम्बोदरदीर्घबाहुमनन्यचेता यमदिङ्मुखः सन्॥४७
खेताश्च दद्यादयदि शक्तिरस्ति रौप्यैः खुरैर्हेममुखीं सवत्सां
धेनुं नरः क्षीरवतीं प्रणम्य सवस्त्रघण्टाभरणां द्विजाय॥४८॥
आसप्तरात्रोदयमेतदस्य दातव्यमेतत् सकलं नरेण।
यावत्समाः सप्तदशाथ वास्युरथोर्ध्वमप्यत्र वदन्ति केचित्॥४९॥
काशपुष्पप्रतीकाश! अग्निमारुतसम्भव!।
मित्रावरुणयोः पुत्र! कुम्भयोने! नमोऽस्तु ते।
प्रत्यहन्तु फलैर्योगमेवं कुर्वन्न सीदति॥ ५०॥
होमं कृत्वा ततः पश्चाद्वर्जयेन्मानवः फलम्।
अनेन विधिना यस्तु पुमानर्घ्यं निवेदयेत्॥ ५१॥
इमं लोकं स चाप्नोति रूपारोग्यसमन्वितः।
द्वितीयेन भुवर्लोकं स्वर्लोकञ्च ततः परम्॥ ५२॥
सप्तैव लोकानाप्नोति सप्तार्घ्यान् यः प्रयच्छति।
यावदायुश्च यः कुर्य्यात् परं ब्रह्माधिगच्छति॥ ५३॥
इह पठति शृणोति वा य एतदुगुलमुनिप्रभवार्घ्यसंप्रदानम्।
मतिमपि च ददाति सोऽपि विष्णोर्भवनगतः परिपूज्यतेऽमरौघैः॥५४

---

## अथैकषष्टितमोऽध्यायः।

मनुरुवाच। सौभाग्यारोग्यफलदममुत्राक्षयकारकम्।

भक्तिमुक्तिप्रदं देव ! तन्मे ब्रूहि जनार्दन ! ॥ १ ॥
मत्स्य उवाच । यदुमायाः पुरा देव ! उवाच पुरसूदनः ।
कैलासशिखरासीना देव्या पृष्टस्तदा किल ॥ २ ॥
कथासु संप्रवृत्तासु धर्म्यासु ललितासु च ।
तदिदानीं प्रवक्ष्यामि भुक्तिमुक्तिफलप्रदम् ॥ ३ ॥
ईश्वर उवाच । शृणुष्वावहिता देवि ! तथैवानन्तपुण्यकृत् ।
नराणामथ नारीणामाराधनमनुत्तमम् ॥ ४ ॥
नभस्ये वाथ वैशाखे पुण्यमार्गशिरस्य च ।
शुक्लपक्षे तृतीयायां सुस्नातो गौरसर्षपैः ॥ ५ ॥
गोरोचनं सगोमूत्रमुष्णं गोशकृतं तथा ।
दधिचन्दनसंमिश्रं ललाटे तिलकं न्यसेत् ।
सौभाग्यारोग्यदं यस्मात् सदा च ललिता प्रियम् ॥ ६ ॥
प्रतिपक्षं तृतीयासु पुमानापीतवाससी ।
धारयेदथ रक्तानि नारी चेदथ संयता ॥ ७ ॥
विधवा धातु रक्तानि कुमारी शुक्लवाससी ।
देवीं तु पञ्चगव्येन ततः क्षीरेण केवलम् ।
स्नापयेन्मधुना तद्वत् पुष्पगन्धोदकेन च ॥ ८ ॥
पूजयेच्छुक्लपुष्पैश्च फलैर्नानाविधैरपि ।
धान्यकाजाजिलवणैर्गुडक्षीरघृतान्वितैः ॥ ९ ॥
शुक्लाक्षततिलैरर्च्चान्ततो देवीं सदार्च्चयेत् ।
पादाद्यभ्यर्च्चनं कुर्य्यात् प्रतिपक्षं वरानने ! ॥ १० ॥
वरदायै नमः पादौ तथा गुल्फौ नमः श्रियै ।
अशोकायै नमो जङ्घे पार्वत्यै जानुनी तथा ॥ ११ ॥
ऊरू मङ्गलकारिण्यै वामदेव्यै तथा कटिम् ।

पयोधराये जठरमुरः कामश्रियै नमः ॥ १२ ॥
करौ सौभाग्यदायिन्यै बाहूदरमुखं श्रियै ।
मुखं दर्पणवासिन्यै स्मरदायै स्मितं नमः ॥ १३ ॥
गौर्यै नम स्तथा नासामुत्पलायै च लोचने ।
तुष्ट्यै ललाटमलकान् कात्यायन्यै शिर स्तथा ॥१४ ॥
नमो गौर्यै नमो धिष्ण्यै नमः कान्त्यै नमः श्रियै ।
रम्भायै ललितायै च वासुदेव्यै नमो नमः ॥ १५ ॥
एवं संपूज्य विधिवदग्रतः पद्ममालिखेत् ।
पत्रैर्द्वादशभिर्युक्तं कुङ्कुमेन स कर्णिकम् ॥ १६ ॥
पूर्वेण विन्यसेद्गौरीमपर्णाञ्च ततः परम् ।
भवानीं दक्षिणे तद्वद्रुद्राणीञ्च ततः परम् ॥ १७ ॥
विन्यसेत् पश्चिमे सौम्यां सदा मदनवासिनीम् ।
वायव्ये पाटला मुग्रामन्तरेण ततोऽप्युमाम् ॥ १८ ॥
मध्ये यथा स्वधासाज्ञामङ्गलां कुमुदां सतीम् ।
रुद्रञ्च मध्ये संस्थाप्य ललितां कर्णिकोपरि ।
कुसुमैरक्षतैर्वार्भिर्नमस्कारेण विन्यसेत् ॥ १९ ॥
गीतमङ्गलनिर्घोषान् कारयित्वा सुवासिनीः ।
पूजयेद्रक्तवासोभीरक्तमाल्यानुलेपनैः ।
सिन्दूरं स्नानचूर्णञ्च तासां शिरसि पातयेत् ॥ २० ॥
सिन्दूरकुङ्कुमस्नानमतीवेष्टतमं यतः ।
तथोपदेष्टारमपि पूजयेद्यत्नतोगुरुम् ।
न पूज्यते गुरुर्यत्र सर्वास्तत्राफलाः क्रियाः ॥ २१ ॥
नभस्ये पूजयेद् गौरीं मुत्पलैरसितैः सदा ।
बन्धुजीवैराश्वयुजि कार्त्तिके शतपत्रकैः ॥ २२ ॥

जातीपुष्पैर्मार्गशीर्षे पौषे पीतैः कुरण्टकैः ।
कुन्दकुङ्कुमपुष्पैस्तु देवीं माघे तु पूजयेत् ।
सिन्दुवारेण जात्या वा फाल्गुनेऽप्यर्चयेदुमाम् ॥ २३ ॥
चैत्रे तु मल्लिकाशोकैर्वैशाखे गन्धपाटलैः ।
ज्यैष्ठे कमलमन्दारैराषाढे च नवाम्बुजैः ।
कदम्बैरथ मालत्या श्रावणे पूजयेत्सदा ॥ २४ ॥
गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकम् ।
बिल्वपत्रार्कपुष्पञ्च यवान् गोशृङ्गवारि च ॥ २५ ॥
पञ्चगव्यञ्च बिल्वञ्च प्राशयेत् क्रमशस्तदा ।
एतद्भाद्रपदाद्यन्तु प्राशनं समुदाहृतम् ॥ २६ ॥
प्रतिपक्षञ्च मिथुनं तृतीयायां वरानने ।
पूजयित्वार्चयेद्भक्त्या वस्त्रमाल्यानुलेपनैः ।
पुंसः पीताम्बरे दद्यात् स्त्रियै कौसुम्भवाससी ॥ २७ ॥
निष्पावाजाजिलवणमिक्षुदण्डगुडान्वितम् ।
तस्यै दद्यात् फलं पुष्पं सुवर्णोत्पलसंयुतम् ॥ २८ ॥
यथा न देवि ! देवेशस्त्वां परित्यज्य गच्छति ।
तथा मामुद्धराशेषदुःखसंसारसागरात् ॥ २९ ॥
कुमुदा विमलानन्ता भवानी च सुधा शिवा ।
ललिता कमला गौरी सती रम्भाथ पार्वती ॥ ३० ॥
नभस्यादिषु मासेषु प्रीयतामित्युदीरयेत् ।
व्रतान्ते शयनं दद्यात् सुवर्णकमलान्वितम् ॥ ३१ ॥
मिथुनानि चतुर्विंशद्दश द्वौ च समर्चयेत् ।
अष्टौ वाप्यथ पुनश्चानुमासं समर्चयेत् ॥ ३२ ॥
पूर्वं दत्त्वा तु गुर्वे शेषानभ्यर्चयेत् बुधः ।

उमानन्ता तृतीयेषा सदानन्तफलप्रदा ॥ २३ ॥
सर्वपापहरां देवि ! सौभाग्यारोग्यवर्धिनीम् ।
न चैनां वित्तशाठेन कदाचिदपि लङ्घयेत् ।
नरो वा यदि वा नारी वित्तशाठ्यात् पतत्यधः ॥२४॥
गर्भिणी सूतिकानक्तं कुमारी वाथ रोगिणी ।
यद्यशुद्धा तदान्येन कारयेत् प्रयता स्वयम् ॥ २५ ॥
इमामनन्तफलदां यस्तृतीयां समाचरेत् ।
कल्पकोटिशतं साग्रं शिवलोके महीयते ॥ २६ ॥
वित्तहीनोऽपि कुरुते वर्षत्रयमुपोषणैः ।
पुष्पमन्त्रविधानेन सोऽपि तत् फलमाप्नुयात् ॥ २७ ॥
नारी वा कुरुते यातु कुमारी विधवाथ वा ।
सापि तत्फलमाप्नोति गौर्यनुग्रहलालिता ॥ २८ ॥
इति पठति शृणोति वा य इत्थं गिरितनयाव्रतमिन्द्रवाससंस्थः ।
मतिमपि च ददाति सोऽपि देवैरमरवधूजनकिन्नरैश्च पूज्यः ॥२९॥

---

अथ द्विषष्टितमोऽध्यायः ।

अथान्यामपि वक्ष्यामि तृतीयां पापनाशिनीम् ।
रसकल्याणिनी मेतां पुराकल्पविदो विदुः ॥ १ ॥
माघमासे तु संप्राप्ते तृतीयां शुक्लपक्षतः ।
प्रातर्गव्येन पयसा तिलैः स्नानं समाचरेत् ॥ २ ॥
स्नापयेन्मधुना देवीं तथैवेक्षुरसेन च ।
दक्षिणाङ्गानि संपूज्य ततो वामानि पूजयेत् ॥३ ॥
ललितायै नमो देव्याः पादौ गुल्फौ ततोऽर्चयेत् ।

अशोकायातुं तथा जान्वोः सर्वेशोरुं श्रिये नमः ॥ ४ ॥
मदालसायै तु कटिममलायै तथोदरम् ।
स्तनौ मदनवासिन्यै कुमुदायै च कन्धराम् ॥ ५ ॥
भुजं भुजाग्रं माधव्यै कमलायै मुखस्मिते ।
भ्रूललाटे च रुद्राण्यै शङ्करायै तथालकान् ॥ ६ ॥
मुकुटं विश्ववासिन्यै शिरः कान्त्यै तथार्चयेत् ।
मदनायै ललाटन्तु मोहनायै पुनर्भ्रुवौ ॥ ७ ॥
नेत्रे चन्द्रार्द्धधारिण्यै तुष्ट्यै च वदनं पुनः ।
उत्कण्ठिन्यै नमः कण्ठममृतायै नमः स्तनौ ॥ ८ ॥
रम्भायै वामकुक्षिञ्च विशोकायै नमः कटिम् ।
हृदयं मन्मथाधिष्ठात्र्यै पाटलायै तथोदरम् ॥ ९ ॥
कटिं सुरतवासिन्यै तथोरुं चम्पकप्रिये ! ।
जानुजङ्घे नमो गौर्यै गायत्र्यै घुटिके नमः ॥ १० ॥
धराधरायै पादौ तु विश्वकायै नमः शिरः ।
नमो भवान्यै कामिन्यै कामदेव्यै जगत्प्रिये ! ॥ ११ ॥
एवं संपूज्य विधिवत् द्विजदाम्पत्यमर्चयेत् ।
भोजयित्वान्नपानेन मधुरेण विमत्सरः ॥ १२ ॥
जलपूरितं तथा कुम्भं शुक्लाम्बरयुगद्वयम् ।
दत्त्वा सुवर्णकमलं गन्धमाल्यैः समर्चयेत् ॥ १३ ॥
प्रीयतामत्र कुमुदा गृह्णीयाल्लवणव्रतम् ।
अनेन विधिना देवीं मासि मासि समर्चयेत् ॥ १४ ॥
लवणं वर्जयेन्माघे फाल्गुने च गुडं पुनः ।
तैलं राजिं तथा चैत्रे वर्ज्यञ्च मधुमाधवे ॥ १५ ॥
पानकं ज्यैष्ठमासे तु आषाढे चाथ जीरकम् ।

श्रावणे वर्जयेत् क्षीरं दधिभाद्रपदे तथा ॥ १६ ॥
घृतमाश्वयुजि तद्वत् ऊर्जे वर्ज्यञ्च माक्षिकम् ।
धान्यकं मार्गशीर्षे तु पौषे वर्ज्या च शर्करा ॥ १७॥
व्रतान्ते करकं पूर्णमेतेषां मासि मासि च ।
दद्याद्द्विकालवेलायां पूर्णपात्रेण संयुतम् ॥ १८ ॥
लड्डुकान् श्वेतवर्णांश्च संयावमथ पूरिकाः ।
घारिकामथ पूपांश्च पिष्टापूपांश्च मण्डकान् ॥ १९ ॥
क्षीरं शाकञ्च दध्यन्नमिण्डर्यौ श्रोकवर्तिकाः ।
माघादि क्रमशो दद्यादेतानि करकोपरि ॥ २० ॥
कुमुदा माधवी गौरी रम्भा भद्रा जया शिवा ।
उमा रतिः सती तद्वन्मङ्गला रतिलालसा ॥ २१ ॥
क्रमान्माघादि सर्वत्र प्रीयतामिति कीर्तयेत् ।
सर्वत्र पञ्चगव्येन प्राशनं समुदाहृतम् ।
उपवासी भवेन्नित्यमशक्तो नक्तमिष्यते ॥ २२ ॥
पुनर्माघे तु संप्राप्ते शर्करां करकोपरि ।
कृत्वा तु काञ्चनीं गौरीं पञ्चरत्नसमन्विताम् ॥ २३ ॥
हैमीमङ्गुष्ठमात्राञ्च साक्षसूत्रकमण्डलुम् ।
चतुर्भुजामिन्दुयुतां सितनेत्रपटावृताम् ॥ २४ ॥
तद्वद्गोमिथुनं शुक्लं सुवर्णास्यं सिताम्बरम् ।
सवस्त्रभाजनं दद्याद्भवानी प्रीयतामिति ॥ २५ ॥
अनेन विधिना यस्तु रसकल्याणिनीव्रतम् ।
कुर्यात्स सर्वपापेभ्यस्तत्क्षणादेव मुच्यते ॥ २६ ॥
नवार्बुदसहस्रन्तु न दुःखी जायते क्वचित् ।
सुवर्णकमलं गौरी मासि मासि दृढव्रतः ।

अग्निष्टोमसहस्रस्य यत् फलं तदवाप्नुयात् ॥ २७ ॥
नारी वा कुरुते यातु कुमारी वा वरानने ! ।
विधवा वा तथा नारी सापि तत् फलमाप्नुयात् ।
सौभाग्यारोग्यसंपन्ना गौरी लोके महीयते ॥ २८ ॥
इति पठति शृणोति यः प्रसङ्गात्
कलिकलुषविमुक्तः पार्वती लोकमेति ।
मतिमपि च नराणां यो ददाति प्रियार्थम्
विबुधपतिविमाने नायकः स्यादमोघः ॥ २९ ॥

---

त्रिषष्टितमोऽध्यायः ।

ईश्वर उवाच । तथैवान्यां प्रवक्ष्यामि तृतीयां पापनाशिनीम् ।
नाम्ना च लोके विख्यातां आर्द्रानन्दकरीमिमाम् ॥१॥
यदा शुक्लतृतीयायामाषाढर्क्षं भवेत् क्वचित् ।
ब्रह्मर्क्षं वा मृगर्क्षं वा हस्तो मूलमथापि वा ।
दर्भगन्धोदकैः स्नानं तदा सम्यक् समाचरेत् ॥२ ॥
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ।
भवानीमर्चयेद्भक्त्या शुक्लपुष्पैः सुगन्धिभिः ।
महादेवेन सहितामुपविष्टां महासने ॥ ३ ॥
वासुदेव्यै नमः पादौ शङ्कराय नमो हरम् ।
जङ्घे शोकविनाशिन्यै आनन्दाय नमः प्रभो ! ॥ ४॥
रम्भायै पूजयेदूरू शिवाय च पिनाकिनः ।
अदित्यै च कटिं देव्याः शूलिनः शूलपाणये ॥ ५ ॥
माधव्यै च तथा नाभिमथ शम्भोर्भवाय च ।
स्तनावानन्दकारिण्यै शङ्करस्येन्दुधारिणे ॥ ६ ॥

उत्कण्ठिन्यै नमः कण्ठं नीलकण्ठाय वै हरम् ।
करावुत्पलधारिण्यै रुद्राय च जगत्पते ! ।
बाहू च परिरम्भिण्यै त्रिशूलाय हराय च ॥ ७ ॥
देव्या मुखं विलासिन्यै वृषेशाय पुनर्विभोः ।
स्मितं सस्मेरलीलायै विश्ववक्त्राय वै विभोः ॥ ८ ॥
नेत्रे मदनवासिन्यै विश्वधाम्ने त्रिशूलिनः ।
भ्रुवौ नित्यप्रियायै तु ताण्डवेशाय शूलिनः ॥ ९ ॥
देव्या ललाटमिन्द्राण्यै हव्यवाहाय वै विभोः ।
स्वाहायै मुकुटं देव्या विभोर्गङ्गाधराय वै ॥ १० ॥
विश्वकायौ विश्वमुखौ विश्वपादकरौ शिवौ ।
प्रसन्नवदनौ वन्दे पार्वतीपरमेश्वरौ ॥ ११ ॥
एवं संपूज्य विधिवदग्रतः शिवयोः पुनः ।
पद्मोत्पलानि रजसा नानावर्णेन कारयेत् ॥ १२ ॥
शङ्खचक्रे स्वस्तिकाद्यान् यथामरान् ।
यावन्तः पांसवस्तत्र रजसः पतिता भुवि ।
तावद्वर्षसहस्राणि शिवलोके महीयते ॥ १३ ॥
चत्वारि घृतपात्राणि सहिरण्यानि शक्तितः ।
दत्त्वा द्विजाय करकमुदकान्नसमन्वितम् ।
प्रतिपक्षं चतुर्मासं यावदेतन्निवेदयेत् ॥ १४ ॥
ततस्तु चतुरो मासान् पूर्ववत् करकोपरि ।
चत्वारि सक्तुपात्राणि तिलपात्राण्यतः परम् ॥ १५ ॥
गन्धोदकं पुष्पवारि चन्दनं कुङ्कुमोदकम् ।
अपक्वं दधि दुग्धञ्च गोशृङ्गोदकमेव च ॥ १७ ॥
पिष्टोदकं तथा वारि कुष्ठचूर्णान्वितं पुनः ।

उशीरसलिलं तद्वद्यवचूर्णोदकं पुनः ॥ १७ ॥
तिलोदकञ्च संप्राश्य स्वपेन्मार्गशिरादिषु ।
मासेषु पक्षद्वितयं प्राशनं समुदाहृतम् ॥ १८ ॥
सर्वत्र शुक्लपुष्पाणि प्रशस्तानि सदार्च्चने ।
दानकाले च सर्वत्र मन्त्रमेतमुदीरयेत् ॥ १९ ॥
गौरी मे प्रीयतां नित्यमघनाशाय मङ्गला ।
सौभाग्यायास्तु ललिता भवानी सर्वसिद्धये ॥ २० ॥
संवत्सरान्ते लवणं गुडकुम्भञ्च सर्जिकाम् ।
चन्दनं नेत्रपट्टञ्च सहिरण्याम्बुजेन तु ॥ २१ ॥
उमामहेश्वरं हैमं तद्वदिक्षुफलैर्युतम् ।
सतूलावरणां शय्यां सविश्रामां निवेदयेत् ।
सपत्नीकाय विप्राय गौरी मे प्रीयतामिति ॥ २२ ॥
आर्द्रानन्दकरी नाम्ना तृतीयैषा सनातनी ।
यामुपोष्य नरो याति शम्भोर्यत्परमम्पदम् ॥ २३ ॥
इह लोके सदानन्दमाप्नोति धनसम्पदः ।
आयुरारोग्यसम्पन्नो न कश्चिच्छोकमाप्नुयात् ॥ २४ ॥
नारी वा कुरुते या तु कुमारी विधवा च या ।
सापि तत् फलमाप्नोति देव्यनुग्रहलालिता ॥ २५ ॥
प्रतिपक्षमुपोष्यैवं मन्त्रार्चनविधानवित् ।
रुद्राणीलोकमभ्येति पुनरावृत्तिदुर्लभम् ॥ २६ ॥
य इदं शृणुयान्नित्यं श्रावयेदापि मानवः ।
शक्रलोके स गन्धर्वैः पूज्यतेऽपि युगत्रयम् ॥ २७ ॥
आनन्ददां सकलदुःखहरां तृतीयाम्
या स्त्री करोत्यविधवाऽविधवाय अपि ।

सा स्वे गृहे सुखशतान्यनुभूय भूयो
गौरी पदं सदयिता दयिता प्रयाति ॥ २८ ॥

---

## अथ चतुःषष्टितमोऽध्यायः ।

ईश्वर उवाच । अथान्यामपि वक्ष्यामि तृतीयां सर्वकामदाम् ।
यस्यां दत्तं हुतं जप्तं सर्वं भवति चाक्षयम् ॥ १ ॥
वैशाखशुक्लपक्षे तु तृतीया ये उपोषिता ।
अक्षयं फलमाप्नोति सर्वस्य सुकृतस्य च ॥ २ ॥
सा तथा कृत्तिकोपेता विशेषेण सुपूजिता ।
तत्र दत्तं हुतं जप्तं सर्वमक्षयमुच्यते ॥ ३ ॥
अक्षया सन्ततिस्तस्यास्तस्यां सुकृतमक्षयम् ।
अक्षतैश्च नराः स्नाता विष्णोर्दत्त्वा तथाक्षतान् ॥ ४ ॥
विप्रेषु दत्त्वा तानेव तथा सक्तून् सुसंस्कृतान् ।
यथान्नभुक् महाभागः फलमक्षयमश्नुते ॥ ५ ॥
एकामप्युक्तवत् कृत्वा तृतीयां विधिवन्नरः ।
एतासामपि सर्वासां तृतीयानां फलं भवेत् ॥ ६ ॥
तृतीयायां समभ्यर्च्य सोपवासो जनार्दनम् ।
राजसूयफलं प्राप्य गतिमग्र्याञ्च विन्दति ॥ ७ ॥
मनुरुवाच । मधुरा भारती केन व्रतेन मधुसूदन ! ।
तथैव जनसौभाग्यं मतिं विद्यासु कौशलम् ॥ १ ॥
अभेदश्चापि दम्पत्योस्तथा बन्धुजनेन च ।
आयुश्च विपुलं पुंसां तन्मे कथय माधव ! ॥ २ ॥
मत्स्य उवाच । सम्यक् पृष्टं त्वया राजन् ! शृणु सारस्वतं व्रतम् ।
यस्य संकीर्तनादेव तुष्यतीह सरस्वती ॥ ३ ॥

यो यद्भक्तः पुमान् कुर्य्यात् एतद्व्रतमनुत्तमम् ।
तद्भक्ताद्यो सम्पूज्य विप्रानेतान् समाचरेत् ॥ ४ ॥
अथवाऽऽदित्यवारेण श्रवणतारावलेन च ।
पायसं भोजयेद्विप्रान् कृत्वा स्वस्त्ययनवाचनम् ॥ ५ ॥
शुक्लवस्त्राणि दत्त्वा च श्वेतस्रगाभिरञ्चितः ।
गायत्रीं पूजयेद्भक्त्या इत्येवमाख्यानुसेमनैः ॥ ६ ॥
यथा न देवि ! भगवान् ब्रह्मलोके पितामहः ।
त्वां परित्यज्य सन्तिष्ठे तथा भव वरप्रदा ॥ ७ ॥
वेदाः शास्त्राणि सर्वाणि गीतनृत्यादिकञ्च यत् ।
न विहीनं त्वया देवि ! तथा मे सन्तु सिद्धयः ॥ ८ ॥
लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टा प्रभामतिः ।
एताभिः पाहि अष्टाभि स्तनूभिर्मां सरस्वति ! ॥ ९ ॥
एवं सम्पूज्य गायत्रीं ब्राह्मीं भयनिवारिणीम् ।
शुक्लपुष्पाक्षतैर्भक्त्या सकमण्डलुपुस्तकाम् ।
मौनव्रतेन भुञ्जीत सायं प्रातश्च धर्म्मवित् ॥ १० ॥
पञ्चम्यां प्रतिपच्चैव पूजयेच्छ्रीसुवासिनीम् ।
तथैव तण्डुलप्रस्थं घृतपात्रेण संयुतम् ।
क्षीरं दद्याद्विरञ्चश्च गायत्री प्रीयतामिति ॥ ११ ॥
सन्ध्यायाञ्च तथा मौनमेतत् कुर्वन् समाचरेत् ।
नान्तरा भोजनं कुर्य्याद्यावन्मासा त्रयोदश ॥ १२ ॥
समाप्ते तु व्रते कुर्य्याद्भोजनं शुक्लतण्डुलैः ।
पूर्णं सवत्सकलसं दद्याद्विप्राय भोजनम् ॥ १३ ॥
देव्या वितानं घण्टाञ्च सितनेत्रे पयस्विनीम् ।
चन्दनं वस्त्रयुग्मञ्च दद्याच्च शिखरं पुनः ॥ १४ ॥

तथोपदेष्टारमपि भक्त्या संपूजयेत् गुरुम् ।
वित्तशाठ्येन रहितो वस्त्रमाल्यानुलेपनैः ॥ १५ ॥
अनेन विधिना यस्तु कुर्यात्सारस्वतं व्रतम् ।
विद्यावानर्थसंयुक्तो रक्तकण्ठश्च जायते ॥ १६ ॥
सरस्वत्याः प्रसादेन ब्रह्मलोके महीयते ।
नारी वा कुरुते या तु सापि तत् फलगामिनी ।
ब्रह्मलोके वसेद्राजन् ! यावत्कल्पायुतत्रयम् ॥ १७ ॥
सारस्वतं व्रतं यस्तु शृणुयादपि यः पठेत् ।
विद्याधरपुरे सोऽपि वसेत् कल्पायुतत्रयम् ॥ १८ ॥

———

अथ पञ्चषष्टितमोऽध्यायः ।

मनुरुवाच । चन्द्रादित्योपरागे तु यत्स्नानमभिधीयते ।
तदहं श्रोतुमिच्छामि द्रव्यमन्त्रविधानवित् ॥ १ ॥
मत्स्य उवाच । यस्य राशिं समासाद्य भवेद्ग्रहणसंभवः ।
तस्य स्नानं प्रवक्ष्यामि मन्त्रौषधविधानतः ॥ २ ॥
चन्द्रोपरागं सम्प्राप्य कृत्वा ब्राह्मणवाचनम् ।
संपूज्य चतुरो विप्रान् शुक्लमाल्यानुलेपनैः ॥ ३ ॥
पूर्वमेवोपरागस्य समासाद्यौषधादिकम् ।
स्थापयेच्चतुरः कुम्भानव्रणान् सागरानिति ॥ ४ ॥
गजाश्वरथ्यावल्मीकसङ्गमाद्ध्रदगोकुलात् ।
राजद्वारप्रदेशाच्च मृदमानीय चाक्षिपेत् ॥ ५ ॥
पञ्चगव्यञ्च कुम्भेषु पञ्चमुक्ताफलानि च ।
रोचनां पद्मशङ्खौ च पञ्चरत्नसमन्वितम् ॥ ६ ॥
स्फटिकं चन्दनं श्वेतं तीर्थवारि ससर्षपम् ।

राजदन्तं सकुमुदं तथैवोशीरगुग्गुलम् ।
एतत्सर्वं विनिक्षिप्य कुम्भेष्वावाहयेत् सुरान् ॥ ७ ॥
सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः ।
आयान्तु यजमानस्य दुरितक्षयकारकाः ॥ ८ ॥
योऽसौ वज्रधरो देव आदित्यानां प्रभुर्मतः ।
सहस्रनयनश्चेन्द्रो ग्रहपीडां व्यपोहतु ॥ ९ ॥
मुखं यः सर्वदेवानां सप्तार्चिरमितद्युतिः ।
चन्द्रोपरागसम्भूतां अग्निः पीडां व्यपोहतु ॥ १० ॥
यः कर्मसाक्षी भूतानां धर्मो महिषवाहनः ।
यमश्चन्द्रोपरागोत्थां ममपीडां व्यपोहतु॥ ११ ॥
नागपाशधरो देवः साक्षान्मकरवाहनः ।
स जलाधिपतिश्चन्द्रग्रह पीडां व्यपोहतु ॥ १२ ॥
प्राणरूपेण यो लोकान् पाति कृष्णमृगप्रियः ।
वायुश्चन्द्रोपरागोत्थां पीडामत्र व्यपोहतु ॥ १३ ॥
योऽसौ निधिपतिर्देवः खड्गशूलगदाधरः ।
चन्द्रोपरागकलुषं धनदो मे व्यपोहतु ॥ १४ ॥
योऽसौ विन्दुधरो देवः पिनाकी वृषवाहनः ।
चन्द्रोपरागजां पीडां विनाशयतु शङ्करः ॥ १५ ॥
त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च ।
ब्रह्मविष्ण्वर्कयुक्तानि तानि पापं दहन्तु वै ॥ १६ ॥
एवमामन्त्र्य तैः कुम्भैरभिषिक्तो गुणान्वितैः ।
ऋग्यजुःसाममन्त्रैश्च शुक्लमाल्यानुलेपनैः ।
पूजयेद्वस्त्रगोदानैर्ब्राह्मणानिष्टदेवताः ॥ १७ ॥
एतानेव ततोमन्त्रान् विलिख्याम्बरकान्वितान् ।

वन्यपृष्ठेऽथ वा पद्मे पञ्चरत्नसमन्विताम् ॥ १८ ॥
यजमानस्य शिरसि निदध्युस्ते द्विजोत्तमाः ।
ततोऽभिवादयेदेतां सुपरागानुगामिनीम् ॥ १९ ॥
प्राङ्मुखः पूजयित्वा तु नमस्येदिष्टदेवताम् ।
चन्द्रग्रहे विनिर्वृत्ते कृतगोदानमङ्गलः ।
कृतस्नानाय तं पट्टं ब्राह्मणाय निवेदयेत् ॥ २० ॥
अनेन विधिना यस्तु ग्रहस्नानं समाचरेत् ।
न तस्य ग्रहपीडा स्यान्न च बन्धुजनक्षयः ॥ २१ ॥
परमां सिद्धिमाप्नोति पुनरावृत्तिदुर्लभाम् ।
सूर्यग्रहे सूर्यनाम सदा मन्त्रेषु कीर्तयेत् ॥ २२ ॥
अधिकाः पद्मरागाः स्युः कपिलाश्च सुशोभनाम् ।
प्रयच्छेच्च निशाम्यत्वे चन्द्रसूर्योपरागयोः ॥ २३ ॥
य इदं शृणुयान्नित्यं श्रावयेद्वाऽपि मानवः ।
सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ २४ ॥

---

अथ षट्षष्टितमोऽध्यायः ।

नारद उवाच । किमुद्वेगाद्भुतं शान्त्यमलक्ष्मीः केन हन्यते ।
मृतवत्साभिषेकादि कार्येषु च किमिष्यते ॥ १ ॥
श्रीभगवानुवाच । पुरा कृतानि पापानि फलन्त्यस्मिंस्तपोधन ।
रोगदौर्गत्यरूपेण तथैवेष्टवधेन च ॥ २ ॥
तद्विघाताय वक्ष्यामि सदाकल्याणकारकम् ।
सप्तमीस्नपनं नाम बालपीडाविनाशनम् ॥ ३ ॥
बालानां मरणं यत्र क्षीरपानां प्रदृश्यते ।
तद्वद्वृद्धे तराणां च यौवने चापि वर्तताम् ॥ ४ ॥

शान्तये तत्र वक्ष्यामि कृतवत्साभिषेचनम् ।
एतदेवाश्रुतोद्वेगचित्तभ्रमविनाशनम् ॥ ५ ॥
भविष्यति च वाराहो यत्र कल्पस्तपोधन ! ।
वैवस्वतश्च तत्रापि यदा तु मनुरुत्तमः ॥ ६ ॥
भविष्यति च तत्रैव पञ्चविंशतिमं यदा ।
कृतं नामयुगं तत्र हैहयान्वयवर्द्धनः ।
भविता नृपतिर्वीरः कृतवीर्यः प्रतापवान् ॥ ७ ॥
स सप्तद्वीपमखिलं पालयिष्यति भूतलम् ।
यावद्वर्षसहस्राणि सप्तसप्तति नारद ! ॥ ८ ॥
जातमात्रञ्च तस्यापि यावत्पुत्रशतं तथा ।
च्यवनस्य तु शापेन विनाशमुपयास्यति ॥ ९ ॥
सहस्रबाहुश्च यदा भविता तस्य वै सुतः ।
कुरङ्गनयनः श्रीमान् स भूतो नृपलक्षणैः ॥ १० ॥
कृतवीर्य्यस्तदाराध्य सहस्रांशुं दिवाकरम् ।
उपवासैर्व्रतैर्दिव्यैर्वेदसूक्तैश्च नारद ! ।
पुत्रस्य जीवनायालमेतत्स्नानमवाप्स्यति ॥ ११ ॥
कृतवीर्य्येण वै पृष्ट इदं वक्ष्यति भास्करः ।
पर्य्याप्तदुष्टशमनं सदा कल्मषनाशनम् ॥ १२ ॥
सूर्य्य उवाच । अलं क्लेशेन महता पुत्रस्य नराधिप ! ।
भविष्यति चिरञ्जीवी किन्तु कल्मषनाशनम् ॥ १३ ॥
सप्तमी स्नपनं वक्ष्ये सर्व्वलोकहिताय वै ।
जातस्य मृतवत्सायाः सप्तमे मासि नारद ! ।
अथवा शुक्लपक्षस्या सैतत्सर्व्वं प्रशस्यते ॥ १४ ॥
अहतारोग्यं कृत्वा ज्ञात्वा ब्राह्मणवाचनम् ।

बालस्य जन्मनक्षत्रं वर्जयेत्तां तिथिं बुधः ।
तद्वद्वृद्धेतराणाञ्च कृत्यं स्यादितरेषु च ॥ १५ ॥
गोमयेनानुलिप्तायां भूमाविकाग्निवत्तदा ।
तण्डुले रक्तशालीयैश्चरुर्नीवारसंयुतम् ।
निर्वपेत् सूर्य्यरुद्राभ्यां तन्मन्त्राभ्यां विधानतः ॥१६॥
कीर्त्तयेत् सूर्य्यदैवत्यं समिर्च्चिं चं घृताहुतीः ।
जुहुयाद्रुद्रसूक्तेन तद्वद्रुद्राय नारद ! ॥ १७ ॥
होतव्याः समिधश्चात्र तथैवार्कपलाशयोः ।०
यवकृष्णतिलैर्होमः कर्त्तव्योऽष्टशतं पुनः ॥ १८ ॥
व्याहृतीभि स्तथाज्येन तथैवाष्टशतं पुनः ।
हुत्वा स्नानञ्च कर्त्तव्यं मङ्गलं येन धीमता ॥ १९ ॥
विप्रेण वेदविदुषा विधिवद्दर्भपाणिना ।
स्थापयित्वा तु चतुरः कुम्भान् कोणेषु शोभनान् ॥२०॥
पञ्चमञ्च पुनर्मध्ये दध्यक्षतविभूषितम् ।
स्थापयेदव्रणं कुम्भं समर्चेनाभिमन्त्रितम् ॥ २१ ॥
सौरेण तीर्थतोयेन पूर्णं रत्नसमन्वितम् ।
सर्वान् सर्वौषधैर्युक्तान् पञ्चगव्यसमन्वितान् ।
पञ्चरत्नफलैः पुष्पैर्वासोभिः परिवेष्टयेत् ॥ २२ ॥
गजाश्वरथ्यावल्मीकात्सङ्गमाद्ध्रदगोकुलात् ।
संगृह्य मृदमानीय सर्वेष्वेव विनिक्षिपेत् ॥ २३ ॥
चतुर्ष्वपि च कुम्भेषु रत्नगर्भेषु मध्यमम् ।
गृहीत्वा ब्राह्मण स्तत्र सौरान्मन्त्रानुदीरयेत् ॥ २४ ॥
नारीभिः सप्तसंख्याभिरव्यङ्गाङ्गीभिरत्र च ।
पूजिताभिर्यथाशक्त्या माल्यवस्त्रविभूषणैः ।

सर्व्विप्राभिश्च कर्त्तव्यं मृतवत्साभिषेचनम् ॥ २५ ॥
दीर्घायुरस्तु बालोऽयं जीवत्पुत्रा च भामिनी ।
आदित्यश्चन्द्रमाः सार्द्धं ग्रहनक्षत्रमण्डलैः ॥ २६ ॥
सशक्रा लोकपाला वै ब्रह्मविष्णुमहेश्वराः ।
एते चान्ये च देवौघाः सदा पान्तु कुमारकम् ॥ २७॥
मित्रोशनिर्वा हुतभुक् ये च बालग्रहाः क्वचित् ।
पीड़ां कुर्वन्तु बालस्य मा मातुर्जनकस्य वै ॥ २८॥
ततः शुक्लाम्बरधरा कुमारपतिसंयुता ।
सप्तकं पूजयेद्भक्त्या स्त्रीणामथ गुरुं पुनः ॥ २९ ॥
काञ्चनीञ्च ततः कुर्यात् ताम्रपात्रोपरि स्थिताम् ।
प्रतिमां धर्म्मराजस्य गुरवे विनिवेदयेत् ॥ ३० ॥
वस्त्रकाञ्चनरत्नाद्यैर्भक्ष्यैः सघृतपायसैः ।
पूजयेद्ब्राह्मणांस्तद्वद्वित्तशाठ्यविवर्जितः ॥ ३१ ॥
भुक्ता च गुरुणा चैव मुच्चार्य्या मन्त्रसन्ततिः ।
दीर्घायुरस्तु बालोऽयं यावद्वर्षशतं सुखी ॥ ३२ ॥
यत् किञ्चिदस्य दुरितं तत् क्षिप्तं वडवानले ।
ब्रह्मा रुद्रो वसुः स्कन्दो विष्णुः शक्रो हुताशनः ॥ ३३ ॥
रक्षन्तु सर्व्वे दुष्टेभ्यो वरदाः सन्तु सर्व्वदा ।
एवमादीनि वाक्यानि वदन्तं पूजयेद्गुरुम् ॥ ३४ ॥
शक्तितः कपिलां दद्यात् प्रणम्य च विसर्जयेत् ।
चरुञ्च पुत्रसहिता प्रणम्य रविशङ्करौ ॥ ३५ ॥
हुतशेषं तदाश्नीयादादित्याय नमोऽस्त्विति ।
इदमेवाद्भुतोद्वेगदुःस्वप्नेषु प्रशस्यते ॥ ३६ ॥
कर्त्तुर्जन्मदिनर्क्षञ्च त्यक्त्वा संपूजयेत् सदा ।

शान्त्यर्थं पञ्चसप्तम्यामेतत् कुर्वन्न सीदति ॥ ३७ ॥
सद्दानेन विधानेन दीर्घायुरभवन्नरः ।
सम्वत्सराणां प्रयुतं शशास पृथिवीमिमाम् ॥ ३८ ॥
पुण्यं पवित्रमायुष्यं सप्तमीस्नपनं रविः ।
कथयित्वा द्विजश्रेष्ठ ! तत्रैवान्तरधीयत ॥ ३९ ॥
एतत् सर्वं समाख्यातं सप्तमीस्नानमुत्तमम् ।
सर्वदुष्टोपशमनं बालानां परमं हितम् ॥ ४० ॥
आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ।
ईश्वरात् ज्ञानमिच्छेत् मोक्षमिच्छेज्जनार्दनात् ॥४१॥
एतन्महापातकनाशनं स्यात्परं हितं बालविवर्द्धनञ्च ।
शृणोति यश्चैनमनन्यचेतास्तस्यापि सिद्धिं मुनयो वदन्ति॥४२॥

---

अथाष्टषष्टितमोऽध्यायः ।

मत्स्य उवाच । पुरा रथन्तरे कल्पे परिपृष्टो महात्मनः ।
मन्दरस्थो महादेवः पिनाकी ब्रह्मणा स्वयम् ॥ १ ॥
ब्रह्मोवाच । कथमारोग्यमैश्वर्यमनन्तममरेश्वर ! ।
स्वल्पेन तपसा देव ! भवेन्मोक्षोऽथवा नृणाम् ॥ २ ॥
किमज्ञातं महादेव ! त्वत्प्रसादादधोक्षज ! ।
स्वल्पकेनाथ तपसा महत् फलमिहोच्यताम् ॥ ३ ॥
मत्स्य उवाच । एवं पृष्टः स विश्वात्मा ब्रह्मणा लोकभावनः ।
उमापतिरुवाचेदं मनसः प्रीतिकारकम् ॥ ४ ॥
ईश्वर उवाच । अस्माद्रथन्तरात् कल्पात् त्रयोविंशात् पुनर्यदा ।
वाराहो भविता कल्पस्तस्य मन्वन्तरे शुभे । ५ ॥
वैवस्वताख्ये सञ्जाते सप्तमे सप्तलोककृत् ।

द्वापराख्यं युगन्तद्वदष्टाविंशतिमष्ट्मगुः ॥ ६ ॥
तस्यान्ते स महादेवो वासुदेवो जनार्द्दनः ।
भारावतरणार्थाय त्रिधा विष्णुर्भविष्यति ॥ ७ ॥
द्वैपायन ऋषिस्तद्वद्रौहिणेयोऽथ केशवः ।
कंसादिदर्पमथनः केशवः क्लेशनाशनः ॥ ८ ॥
पुरीं द्वारवतीं नाम साम्प्रतं या कुशस्थली ।
दिव्यानुभावसंयुक्ता मधिवासाय शार्ङ्गिणः ।
त्वष्टा ममाज्ञया तद्वत् करिष्यति जगत्पतेः ॥ ९ ॥
तस्यां कदाचिदासीनः सभायाममितद्युतिः ।
भार्याभिर्वृष्णिभिश्चैव भूभृद्भिर्भूरिदक्षिणः ॥ १० ॥
कुरुभिर्देवगन्धर्वैरभितः कैठभार्द्दनः ।
प्रवृत्तासु पुराणासु धर्म्मसम्बधिनीषु च ॥ ११ ॥
कथान्ते भीमसेनेन परिपृष्टः प्रतापवान् ।
त्वया पृष्टस्य धर्म्मस्य रहस्यस्यास्य भेदकृत् ॥ १२ ॥
भविता स तदा ब्रह्मन् ! कर्ता चैव वृकोदरः ।
प्रवर्तकोऽस्य धर्म्मस्य पाण्डुपुत्त्रो महाबलः ॥ १३ ॥
यस्य तीक्ष्णो वृको नाम जठरे हव्यवाहनः ।
मया दत्तः स धर्म्मात्मा तेन चासौ वृकोदरः ॥ १४ ॥
मतिमान्दानशीलश्च नागायुतबलोमहान् ।
भविष्यत्यरजाः श्रीमान् कन्दर्प इव रूपवान् ॥ १५ ॥
धार्मिकस्याप्यशक्तस्य तीव्राग्नित्वादुपोषणे ।
इदं व्रतमशेषाणां व्रतानामधिकं यतः ॥ १६ ॥
कथयिष्यति विश्वात्मा वासुदेवो जगद्गुरुः ।
अशेषयज्ञफलदमशेषाघविनाशनम् ॥ १७ ॥

अशेषदुष्टशमनमशेषसुरपूजितम्।
पवित्राणां पवित्रञ्च मङ्गलानाञ्च मङ्गलम्।
भविष्यञ्च भविष्याणां पुराणानां पुरातनम्॥ १८॥
वासुदेव उवाच। यद्यष्टमी चतुर्दश्यो र्द्वादशीष्वथ भारत!।
अन्येष्वपि दिनर्क्षेषु न शक्तस्त्वमुपोषितुम्॥ १९॥
ततः पुण्यान्तिथिमिमां सर्वपापप्रणाशिनीम्।
उपोष्य विधिनानेन गच्छ विष्णोः परम्पदम्॥ २०॥
माघमासस्य दशमी यदा शुक्ला भवेत्तदा।
घृतेनाभ्यञ्जनं कृत्वा तिलैः स्नानं समाचरेत्॥ २१॥
तथैव विष्णुमभ्यर्च्य नमोनारायणेति च।
कृष्णाय पादौ संपूज्य शिरः सर्वात्मने नमः॥ २२॥
वैकुण्ठायेति वैकण्ठमुरः श्रीवत्सधारिणे।
शङ्खिने चक्रिणे तद्वद् गदिने वरदाय हिवै।
सर्वं नारायणस्यैव संपूज्या बाहवः क्रमात्॥ २३॥
दामोदरायेत्युदरं मेढ्रं पञ्च शरा वै।
ऊरू सौभाग्यनाथाय जानुनी भूतधारिणे॥ २४॥
नमो नीलाय वै जङ्घे पादौ विश्वसृजे नमः।
नमो देव्यै नमः शान्त्यै नमो लक्ष्म्यै नमः श्रियै॥२५॥
नमः पुष्ट्यै नमस्तुष्ट्यै घृष्ट्यै हृष्ट्यै नमोनमः।
नमो विहङ्गनाथाय वायुवेगाय पक्षिणे।
विषप्रमाथिने नित्यं गरुडश्चाभिपूजयेत्॥ २६॥
एवं संपूज्य गोविन्दं उमापतिविनायकौ॥
गन्धैर्माल्यैस्तथा धूपैर्भक्ष्यैर्नानाविधैरपि॥ २७॥
गव्येन पयसा सिद्धङ्कसरामथ वाग्यतः।

सर्पिषा सह भुक्त्वा च गत्वा शतपदं बुधः ॥ २८ ॥
नैयग्रोधं दन्तकाष्ठमथ वा खादिरं बुधः ।
गृहीत्वा धावयेद्दन्तानाचान्तः प्रागुदङ्मुखः ॥ २९ ॥
ब्रूयात् सायन्तनीं कृत्वा सन्ध्यामस्तमिते रवौ ।
नमो नारायणायेति त्वामहं शरणङ्गतः ॥ ३० ॥
एकादश्यां निराहारः समभ्यर्च्य च केशवम् ।
रात्रिञ्च सकलां स्थित्वा स्नानञ्च पयसा तथा ॥ ३१ ॥
सर्पिसा चापि दहनं हुत्वा ब्राह्मणपुङ्गवैः ।
सहैव पुण्डरीकाक्ष ! द्वादश्यां क्षीरभोजनम् ।
करिष्यामि यतात्माहं निर्विघ्नेनास्तु तच्च मे ॥३२ ॥
एवमुक्त्वा स्वपेद्भूमावितिहासकथां पुनः ।
श्रुत्वा प्रभाते सञ्जाते नदीं गत्वा विशाम्पते ! ।
स्नानं कृत्वा मृदा तद्वत् पाषण्डानभिवर्जयेत् ॥ ३३ ॥
उपास्य सन्ध्यां विधिवत् कृत्वा च पितृतर्पणम् ।
प्रणम्य च हृषीकेशं सर्वलोकैकमीश्वरम् ॥ ३४ ॥
गृहस्य पुरतो भक्त्या मण्डपं कारयेद् बुधः ।
दशहस्तमथाष्टौ वा करान् कुर्याद्विशाम्पते ! ॥ ३५ ॥
चतुर्हस्तां शुभां कुर्याद्वेदीमरिनिषूदन ! ।
चतुर्हस्तप्रमाणञ्च विन्यसेत्तत्र तोरणम् ॥ ॥ ३६ ॥
प्रणम्य कलशं तत्र माषमात्रेण संयुतम् ।
छिद्रेण जलसम्पूर्णमथ कृष्णाजिनस्थितः ।
तस्य धारां च शिरसा धारयेत् सकलान्निशम् ॥३७॥
तथैव विष्णोः शिरसि क्षीरधारां प्रपातयेत् ।
अरत्निमात्रं कुण्डञ्च कुर्यात्तत्र त्रिमेखलम् ॥ ३८ ॥

योनिवक्त्रञ्च तत् कृत्वा ब्राह्मणैः पयसर्पिषी ।
तिलांश्च विष्णुदैवत्यैर्मन्त्रैरेकाग्निवत्तदा ॥ ४० ॥
हुत्वा च वैष्णवं सम्यक् चरुं गोक्षीरसंयुतम् ।
निष्पावार्द्धप्रमाणां वै धारामाज्यस्य पातयेत् ॥४१॥
जलकुम्भान् महावीर्य्य ! स्थापयित्वा त्रयोदश ।
भक्ष्यैर्नानाविधैर्युक्तान् सितवस्त्रैरलङ्कृतान् ॥ ४२ ॥
युक्तानौदुम्बरैः पात्रैः पञ्चरत्नसमन्वितान् ।
चतुर्भिर्बह्वृचैर्होमस्तत्र कार्य्य उदङ्मुखैः ॥ ४२ ॥
रुद्रजापश्चतुर्भिश्च यजुर्वेदपरायणैः ।
वैष्णवानि तु सामानि चतुरः सामवेदिनः ।
अरिष्टवर्गसहितान्यभितः परिपाठयेत् ॥ ४४ ॥
एवं द्वादश तान् विप्रान् वस्त्रमाल्यानुलेपनैः ।
पूजयेदङ्गुलीयैश्च कटकैर्हेमसूत्रकैः ॥ ४५ ॥
वासोभिः शयनीयैश्च वित्तशाठ्यविवर्जितः ।
एवं क्षपातिवाह्या च गीतमङ्गलनिस्वनैः ॥ ४६ ॥
उपाध्यायस्य च पुनर्द्विगुणं सर्वमेव तु ।
ततः प्रभाते विमले समुत्थाय त्रयोदश ॥ ४७ ॥
गावो दद्यात् कुरुश्रेष्ठ ! सौवर्णमुखसंयुताः ।
पयस्विन्यः शीलवत्यः कांस्यदोहसमन्विताः ॥४८॥
रौप्यखुराः सवत्साश्च चन्दनेनाभिषेचिताः ।
तास्तु तेषां ततो भक्त्या भक्ष्यभोज्यावतर्पितान् ॥४९॥
कृत्वा वै ब्राह्मणान् सर्वानन्नैर्नानाविधैस्तथा ।
भुक्त्वा चाक्षारलवणमात्मना च विसर्जयेत् ॥ ५० ॥
अनुगम्य पदान्यष्टौ पुत्रभार्यासमन्वितः ।

प्रीयतामत्र देवेशः केशवः क्लेशनाशनः ॥ ५१ ॥
शिवस्य हृदये विष्णुर्विष्णोश्च हृदये शिवः ।
यथान्तरं न पश्यामि तथा मे स्वस्ति चायुषः ॥५२॥
एवमुच्चार्य तान् कुम्भान् गाश्चैव शयनानि च ।
वासांसि चैव सर्वेषां गृहाणि प्रापयेद् बुधः ॥ ५३ ॥
अभावे बहुशय्यानामेकामपि सुसंस्कृताम् ।
शय्यां दद्याद्द्विजातेश्च सर्वोपस्करसंयुताम् ॥५४ ॥
इतिहासपुराणानि वाचयित्वातिवाहयेत् ।
तद्दिनं नरशार्दूल ! य इच्छेद्विपुलां श्रियम् ॥ ५५ ॥
तस्मात्त्वं सत्वमालम्ब्य भीमसेन ! विमत्सरः ।
कुरु व्रतमिदं सम्यक् स्नेहान्मम मयेरितम् ॥ ५६ ॥
त्वया कृतमिदं वीर ! त्वन्नामाख्यं भविष्यति ।
सा भीमद्वादशी ह्येषा सर्वपापहरा शुभा ।
या तु कल्याणिनी नाम पुरा कल्पेषु पठ्यते ॥ ५७ ॥
त्वमादिकर्ता भव सौकरेऽस्मिन् कल्पे महावीरवरप्रधान ! ।
यस्याः स्मरन् कीर्तनमप्यशेषं विनष्टपापस्त्रिदशाधिपः स्यात् ५८॥
कृत्वा च यामप्सरसामधीशा वेश्याकृता ह्यन्यभवान्तरेषु ।
आभीरकन्यातिकुतूहलेन सैवोर्वशी सम्प्रति नाकपृष्ठे ॥ ५९ ॥
जाताथवा वैश्यकुलोद्भवापि पुलोमकन्या पुरुहूतपत्नी ।
तत्रापि तस्याः परिचारिकेयं मम प्रिया सम्प्रति सत्यभामा॥६०॥
स्नातः पुरा मण्डलमेष तद्वत्तेजोमयं वेदशरीरमाप ।
अस्याश्च कल्याणतिथौ विवस्वान् सहस्रधारेण सहस्ररश्मिः ६१
इदमेव कृतं महेन्द्रमुख्यैर्वसुभिर्देवसुरारिभिस्तथा तु ।
फलमस्य न शक्यतेऽभिवक्तुं यदि जिह्वायुतकोटयो मुखे स्युः ।

कलिकलुषविदारिणीमनन्तामिति कथयिष्यति यादवेन्द्रमनुः ६२
अपि नरकगतान् पितृनशेषानलमुद्धर्तुमिहैव यः करोति।
य इदमघविदारणं शृणोति भक्त्या परिपठतीह परोपकारहेतोः।
तिथिमिह सकलार्थभाङ् नरेन्द्रस्तव चतुरानन !साम्यतामुपैति ६३
कलग्राविनी नाम पुरा बभूव या द्वादशी माघदिनेषु पूज्या।
सा पाण्डुपुत्रेण कृता भविष्यत्यनन्तपुण्यानघ ! भीमपूर्वा ॥ ६४॥

---

अथोनसप्ततितमोऽध्यायः।

ब्रह्मोवाच। वर्णाश्रमाणां प्रभवः पुराणेषु मया श्रुतः।
सदाचारस्य भगवन् ! धर्मशास्त्रविनिश्चयः।
पुण्यस्त्रीणां सदाचारं श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥
ईश्वर उवाच। तस्मिन्नेव युगे ब्रह्मन् ! सहस्राणि तु षोडश।
वासुदेवस्य नारीणां भविष्यन्त्यम्बुजोद्भव ! ॥ २ ॥
ताभिर्वसन्तसमये कोकिलालिकुलाकुले।
पुष्पिते पवनोत्फुल्लकल्हारसरसस्तटे ॥ ३ ॥
निर्भरापानगोष्ठीषु प्रसक्ताभिरलङ्कृतः।
कुरङ्गनयनः श्रीमान् मालतीकृतशेखरः ॥ ४ ॥
गच्छन् समीपमार्गेण साम्बः परपुरञ्जयः।
साक्षात्कन्दर्परूपेण सर्वाभरणभूषितः ॥ ५ ॥
अनङ्गशरतप्ताभिः साभिलाषमवेक्षितः।
प्रवृद्धोमन्मथस्तासां भविष्यति यदात्मनि ॥ ६ ॥
तदावेक्ष्य जगन्नाथः सर्वतो ध्यानचक्षुषा।
शापं वक्ष्यति ताः सर्वा वो हरिष्यन्ति दस्यवः।
मत्परोक्षं यतः कामलीलादीदृग्विधं कृतम् ॥ ७ ॥

ततः प्रसादितो देव इदं वक्ष्यति शार्ङ्गभृत् ।
ताभिः शापाभितप्ताभिर्भगवान् भूतभावनः ॥ ८ ॥
उत्तारभूतन्दासत्वं समुद्रादब्राह्मणप्रियः ।
उपदेक्ष्यत्यनन्तात्मा भाविकल्याणकारकम् ॥ ९ ॥
भवतीनां मृषिर्दाल्भ्यो यद्व्रतं कथयिष्यति ।
तदेवोत्तारणायालं दासत्वेऽपि भविष्यति ।
इत्युक्त्वा ताः परिष्वज्य गतो द्वारवतीश्वरः ॥ १० ॥
ततः कालेन महता भारावतरणे कृते ।
निवृत्ते मौसले तद्वत् केशवे दिवमागते ॥ ११ ॥
शून्ये यदुकुले सर्वैश्चौरैरपि जितेऽर्जुने ।
हृतासु कृष्णपत्नीषु दासभोग्यासु चाम्बुधौ ॥ १२ ॥
तिष्ठन्तीषु च दौर्गत्यसन्तप्तासु चतुर्मुख ! ।
आगमिष्यति योगात्मा दाल्भ्यो नाम महातपाः ॥१३॥
तास्तमर्घ्येण संपूज्य प्रणिपत्य पुनः पुनः ।
लालप्यमाना बहुशो वाष्पपर्याकुलेक्षणाः ॥ १४ ॥
स्मरन्त्यो विपुलान् भोगान् दिव्यमाल्यानुलेपनम् ।
भर्तारञ्जगतामीशमनन्तमपराजितम् ॥ १५ ॥
दिव्यभावान्तास्च पुरीं नानारत्नगृहाणि च ।
द्वारकावासिनः सर्वान् देवरूपान् कुमारकान् ।
प्रश्नमेवं करिष्यन्ति मुनेरभिमुखं स्थिताः ॥ १६ ॥
स्त्रिय ऊचुः । दस्युभिर्भगवन् ! सर्वाः परिभुक्ता वयं बलात् ।
स्वधर्माच्च्यावतेऽस्माकमत्रिन्वः शरणम्भव ॥ १७ ॥
आदिष्टोऽसि पुरा ब्रह्मन् ! केशवेन च धीमता ।
कस्मादीशेन संयोगं प्राप्य नैश्यात्वमागताः ॥ १८ ॥

वेश्यानामपि यो धर्म्मस्तन्नो ब्रूहि तपोधन ! ।
कथयिष्यत्यतस्तासां स दाल्भ्यश्चैकितायनः ॥ १९॥
दाल्भ्य उवाच । जलक्रीडाविहारेषु पुरा सरसि मानसे ।
भवतीनाञ्च सर्व्वासां नारदोऽभ्यासमागतः ॥ २० ॥
हुताशनसुताः सर्व्वा भवन्त्योऽप्सरसः पुरा ।
अप्रणम्यावलेपेन परिपृष्टः स योगवित् ।
कथं नारायणोऽस्माकं भर्त्ता स्यादित्युपादिश ॥ २१॥
तस्माद्वरप्रदानं वः शापश्चायमभूत् पुरा ।
शय्याद्वयप्रदानेन मधुमाधवमासयोः ॥ २२ ॥
सुवर्णोपस्करोत्सर्गा द्वादश्यां शुक्लपक्षतः ।
भर्त्ता नारायणो नूनं भविष्यत्यन्यजन्मनि ॥ २३ ॥
यदकृत्वा प्रणामं मे रूपसौभाग्यमत्सरात् ।
परिपृष्टोऽस्मि तेनाशु वियोगो वा भविष्यति ।
चौरैरपहृताः सर्व्वा वेश्यात्वं समवाप्स्यथ ॥ २४ ॥
एवं नारदशापेन केशवस्य च धीमतः ।
वेश्यात्वमागताः सर्व्वा भवन्त्यः काममोहिताः ।
इदानीमपि यद्वच्मि तच्छृणुध्वं वराङ्गनाः ! ॥२५ ॥
दाल्भ्य उवाच । पुरा देवासुरे युद्धे हतेषु शतशः सुरैः ।
दानवासुरदैत्येषु राक्षसेषु ततस्ततः ॥ २६ ॥
तेषां शतसहस्राणि शतान्यपि च योषिताम् ।
परिणीतानि यानि स्युर्बलाद्भुक्तानि यानि वै ।
तानि सर्व्वाणि देवेशः प्रोवाच वदताम्वरः ॥ २७ ॥
इन्द्र उवाच । वेश्याधर्म्मेण वर्त्तध्वमधुना नृपमन्दिरे ।
भक्तिमत्योवरारोहास्तथा देवकुलेषु च ॥ २८ ॥

राजानः स्वामिनस्तुभ्या सुता वापि च तत्समाः ।
भविष्यति च सौभाग्यं सर्वासामपि शक्तितः ॥ २९॥
यः कश्चिच्छुल्कमादाय गृहमेष्यति वः सदा ।
निधनेनोपचार्योवः स तदान्यत्र दाम्भिकात् ॥३०॥
देवतानां पितॄणां च पुण्याहे समुपस्थिते ।
गोभूहिरण्यधान्यानि प्रदेयानि स्वशक्तितः ।
ब्राह्मणानां वरारोहाः कार्याणि वचनानि च ॥३१ ॥
यच्चाप्यन्यद्व्रतं सम्यगुपदेक्ष्यामहं ततः ।
अविचारेण सर्वाभिरनुष्ठेयं च तत्पुनः ॥ ३२ ॥
संसारोत्तारणायाल मेतद्वेदविदोविदुः ।
यदा सूर्यदिने हस्तः पुष्योवाथ पुनर्वसुः ॥ ३३ ॥
भवेत्सर्वौषधीस्नानं सम्यङ्नारी समाचरेत् ।
तदा पञ्चशरस्यापि संनिधानत्वमेष्यति ।
अर्चयेत् पुण्डरीकाक्षमनङ्गस्यानुकीर्तनैः ॥ ३४ ॥
कामाय पादौ संपूज्य जङ्घे वै मोहकारिणे ।
मेढ्रं कन्दर्पनिधये कटिं प्रीतिमते नमः ॥ ३५ ॥
नाभिं सौख्यसमुद्राय रामाय च तथोदरम् ।
हृदयं हृदयेशाय स्तनौ वाह्लादकारिणे ॥ ३६ ॥
उत्कण्ठायेति वैकण्ठमास्यमानन्दकारिणे ।
वामाङ्गं पुष्पचापाय पुष्पबाणाय दक्षिणम् ॥ ३७ ॥
मानसायेति वै मौलिं विलोलायेति मूर्धजम् ।
सर्वात्मने च सर्वाङ्गं देवदेवस्य पूजयेत् ॥ ३८ ॥
नमः शिवाय शान्ताय पाशाङ्कुशधराय च ।
गदिने पीतवस्त्राय शङ्खचक्रधराय च ॥ ३९ ॥

नमो नारायणायेति कामदेवात्मने नमः ।
सर्वप्राप्त्यै नमः प्रीत्यै नमो रत्यै नमः श्रियै ॥ ४० ॥
नमः पुष्ट्यै नमस्तुष्ट्यै नमः सर्वार्थसम्पदे ।
एवं संपूज्य देवेशमनङ्गात्मकमीश्वरम् ।
गन्धैर्माल्यैस्तथा धूपैर्नैवेद्येन च कामिनी ॥ ४१ ॥
तत आह्वय धर्म्मज्ञं ब्राह्मणं वेदपारगम् ।
अव्यङ्गावयवं पूज्य गन्धपुष्पार्चनादिभिः ॥ ४२ ॥
शालेय तण्डुलप्रस्थं घृतपात्रेण संयुतम् ।
तस्मै विप्राय सा दद्यान्माधवः प्रीयतामिति ॥ ४३ ॥
यथेष्टाहारयुक्तं वै तमेव द्विजसत्तमम् ।
रत्यर्थं कामदेवोऽयमिति चित्तेऽवधार्यताम् ॥ ४४ ॥
यद्यदिच्छति विप्रेन्द्रस्तत्तत् कुर्याद्विलासिनी ।
सर्वभावेन चात्मानमर्पयेत् स्मितभाषिणी ॥ ४५ ॥
एवमादित्यवारेण सर्वमेतत्समाचरेत् ।
तण्डुलप्रस्थदानञ्च यावन्मासास्त्रयोदश ॥ ४६ ॥
ततस्त्रयोदशे मासि संप्राप्ते तस्य भामिनी ।
विप्रस्योपस्करैर्युक्तां शय्यां दद्याद्विलक्षणाम् ॥ ४७ ॥
सोपधानकविश्रामां सास्तरावरणां शुभाम् ।
प्रदीपोपानच्छत्रपादुकासनसंयुताम् ॥ ४८ ॥
सपत्नीकमलङ्कृत्य हेमसूत्राङ्गुलीयकैः ।
सूक्ष्मवस्त्रैः सकटकैर्धूपमाल्यानुलेपनैः ॥ ४९ ॥
कामदेवं सपत्नीकं गुडकुम्भोपरि स्थितम् ।
ताम्रपात्रासनगतं हैमनेत्रपटावृतम् ॥ ५० ॥
सकांस्यभाजनोपेतमिक्षुदण्ड समन्वितम् ।

दद्यादनेन मन्त्रेण तथैकां गां पयस्विनीम् ॥ ५१ ॥
यथान्तरं न पश्यामि कामकेशवयोः सदा ।
तथैव सर्वकामाप्तिरस्तु विष्णो ! सदा मम ॥ ५२ ॥
यथा न कमला देहात् प्रयाति तव केशव ! ।
तथा ममापि देवेश ! शरीरे स्वे कुरु प्रभो ! ॥ ५३ ॥
तथा च काञ्चनं देवं प्रतिगृह्णन् द्विजोत्तमः ।
क इदं कस्मादादिति वैदिकं मन्त्रमीरयेत् ॥ ५४ ॥
ततः प्रदक्षिणीकृत्य विसृज्य द्विजपुङ्गवम् ।
शय्यासनादिकं सर्वं ब्राह्मणस्य गृहं नयेत् ॥ ५५ ॥
ततः प्रभृति यो विप्रो रत्यर्थं गृहमागतः ।
स मान्यः सूर्यवारे च स मन्तव्यो भवेत्सदा ॥ ५६ ॥
एवं त्रयोदश यावन्मासमेवं द्विजोत्तमान् ।
तर्पयेत यथाकामं प्रोषितेऽन्यं समाचरेत ॥ ५७ ॥
तदनुज्ञया रूपयुक्तो यावदभ्यागतो भवेत् ।
आत्मनोऽपि यथाविघ्नं गर्भभूतिकरं भवेत् ॥ ५८ ॥
दैवं वा मानुषं वा स्यादनुरागेण वा ततः ।
साचारानष्टपञ्चाशद्यथाशक्त्या समाचरेत् ॥ ५९ ॥
एतद्वः कथितं सम्यक् भवतीनां विशेषतः ।
अधर्मोऽयं ततो न स्याद्वेश्यानामिह सर्वदा ॥ ६० ॥
पुरुहूतेन यत् प्रोक्तं दानवीषु पुरा मया ।
तदिदं साम्प्रतं सर्वं भवतीष्वपि युज्यते ॥ ६१ ॥
सर्वपापप्रशमनमनन्तफलदायकम् ।
कल्याणीनां प्रकथितं तत् कुरुध्वं वराननाः ! ॥ ६२ ॥

करोति या शेषमखण्डमेतत् कलत्रभाविनी माधवलोकसंस्था।
सा पूजिता देवगणैरशेषैरानन्दकृत्स्थानमुपैति विष्णोः ॥६३॥
श्रीभगवानुवाच।
तपोधनः सोऽप्यभिधाय चैवं तदा च तासां व्रतमङ्गनानाम्।
स्वस्थानमेष्यन्ति समस्तमित्थं व्रतं करिष्यन्ति च देवयोनिः ॥६४

---

अथ सप्ततितमोऽध्यायः।

ब्रह्मोवाच। भगवन्! पुरुषस्येह स्त्रियाश्च विरहादिकम्।
शोकव्याधिभयं दुःखं न भवेद्येन तद्वद ॥ १ ॥
श्रीभगवानुवाच। श्रावणस्य द्वितीयायां कृष्णायां मधुसूदनः।
क्षीरार्णवे सपत्नीकः सदा वसति केशवः ॥ २ ॥
तस्यां सम्पूज्य गोविन्दं सर्वान् कामान् समश्नुते।
गोभूहिरण्यदानादि सप्तकल्पशतानुगम् ॥ ३ ॥
अशून्यशयनं नाम द्वितीया सम्प्रकीर्त्तिता।
तस्यां सम्पूजयेद्विष्णुं एभिर्मन्त्रैर्विधानतः ॥ ४ ॥
श्रीवत्सधारिन्! श्रीकान्त! श्रीधामन्! श्रीपतेऽव्यय!।
गार्हस्थ्यं मा प्रणाशं मे यातु धर्म्मार्थकामदम् ॥५॥
अग्नयो मा प्रणश्यन्तु देवताः पुरुषोत्तम!।
पितरो मा प्रणश्यन्तु मास्तु दाम्पत्यभेदनम् ॥ ६ ॥
लक्ष्म्या वियुज्यते देव! न कदाचिद्यथा भवान्।
तथा कलत्रसम्बन्धो देव! मा मे वियुज्यताम् ॥ ७ ॥
लक्ष्म्या न शून्यो वरद! यथा त्वं शयनं गतः।
शय्या ममाप्यशून्यास्तु तथैव मधुसूदन! ॥ ८ ॥
गीतवादित्रनिर्घोषं देवदेवस्य कीर्त्तयेत्।

घण्टाभवेदशक्तस्य सर्वदाघमयी यतः ॥ ९ ॥
एवं सम्पूज्य गोविन्दमश्नीयात्तैलवर्जितम् ।
नक्तमक्षारलवणं यावत्तस्याच्चतुष्टयम् ॥ १० ॥
ततः प्रभाते सञ्जाते लक्ष्मीपतिसमन्विताम् ।
दीपान्नभाजनैर्युक्तां शय्यां दद्याद्विलक्षणाम् ॥ ११ ॥
पादुकोपानहच्छत्रचामरासनसंयुताम् ।
अभीष्टोपस्करैर्युक्तां शुक्लपुष्पाम्बरावृताम् ॥ १२ ॥
सोपधानकविश्रामां फलैर्नानाविधैर्युताम् ।
तथाभरणधान्यैश्च यथाशक्त्या समन्विताम् ॥ १३ ॥
अव्यङ्गाङ्गाय विप्राय वैष्णवाय कुटुम्बिने ।
दातव्या वेदविदुषे भावेनापतिताय च ॥ १४ ॥
तत्रोपविश्य दाम्पत्यमलङ्कृत्य विधानतः ।
पत्न्यास्तु भाजनं दद्याद्भक्ष्यभोज्यसमन्वितम् ॥ १५ ॥
ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्विताम् ।
प्रतिमां देवदेवस्य सोदकुम्भां निवेदयेत् ॥ १६ ॥
एवं यस्तु पुमान् कुर्य्यादशून्यशयनं हरेः ।
वित्तशाठ्येन रहितो नारायणपरायणः ॥ १७ ॥
नारी वा विधवा ब्रह्मन् ! यावच्चन्द्रार्कतारकम् ।
न विरूपौ न शोकार्त्तौ दम्पती भवतः क्वचित् ॥१८॥
न पुत्रपशुरत्नानि क्षयं यान्ति पितामह ! ।
सप्तकल्पसहस्राणि सप्तकल्पशतानि च ।
कुर्वन्नशून्यशयनं विष्णुलोके महीयते ॥ १९ ॥

## अथैकसप्ततितमोऽध्यायः ।

---

ईश्वर उवाच । शृणु चान्यद्व्रतविधं यद्रूपसम्पद्विधायकम् ।
भविष्यति युगे तस्मिन् द्वापरान्ते पितामह ! ।
पिप्पलादस्य संवादो युधिष्ठिरपुरःसरैः ॥ १ ॥
वसन्तं नैमिषारण्ये पिप्पलादं महामुनिम् ।
अधिगम्य तदा चैनं प्रश्नमेकं करिष्यति ।
युधिष्ठिरो धर्म्मपुत्रो धर्म्मयुक्त स्तपोधनम् ॥ २ ॥
युधिष्ठिर उवाच । कथमारोग्यमैश्वर्य्यं मतिर्धर्मे गति स्तथा ।
अव्यङ्गता शिवे भक्तिर्वैष्णवी वा भवेत्कथम् ॥ ३ ॥
ईश्वर उवाच । तस्योत्तरमिदं ब्रह्मन् ! पिप्पलादस्य धीमतः ।
शृणुष्व यद्वक्ष्यति वै धर्म्मपुत्राय धार्मिकः ॥ ४ ॥
पिप्पलाद उवाच । साधु पृष्टं त्वया भद्र ! इदानीं कथयामि ते ।
अङ्गारव्रतमित्येतत् स वक्ष्यति महीपतिः ॥ ५ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विरोचनस्य सम्वादं भार्गवस्य च धीमतः ॥ ६ ॥
प्रह्लादस्य सुतं दृष्ट्वा द्विरष्टपरिवत्सरम् ।
रूपेणाप्रतिमं कान्त्या सोऽहसद्भृगुनन्दनः ॥ ७ ॥
साधु साधु महाबाहो ! विरोचन ! शिवं तव ।
तत्तथा हसितं तस्य पप्रच्छ सुरसूदनः ॥ ८ ॥
ब्रह्मन् ! किमर्थमेतत्ते हास्यमाकस्मिकं कृतम् ।
साधु साध्विति मामेवमुक्तवांस्त्वं वदस्व मे ॥ ९ ॥

तमेवं वादिनं ब्रह्मा उवाच वदतांवरः ।
विस्मयाद्व्रतमाहात्म्याद्धास्यमेतत् कृतं मया ॥ १० ॥
पुरा दक्षविनाशाय कुपितस्य तु शूलिनः ।
अथ तद्भीमवक्त्रस्य स्वेदबिन्दुर्ललाटजः ॥ ११ ॥
भित्त्वा स सप्तपातालानदहत् सप्त सागरान् ।
अनेकवक्त्रनयनोज्ज्वलज्ज्वलनभीषणः ॥ १२ ॥
वीरभद्र इति ख्यातः करपादायुतैर्युतः ।
कृत्वासौ यज्ञमथनं पुनर्भूतलसम्भवः ।
त्रिजगन्निर्दहन् भूयः शिवेन विनिवारितः ॥ १३ ॥
कृतं त्वया वीरभद्र ! दक्षयज्ञविनाशनम् ।
इदानीमलमेतेन लोकदाहेन कर्म्मणा ।
शान्तिप्रदाता सर्वेषां ग्रहाणां प्रथमो भव ।
प्रेक्षिष्यन्ते जनाः पूजां करिष्यन्ति वरात्मम ॥ १५ ॥
अङ्गारक इति ख्यातिं गमिष्यसि धरात्मज ! ।
देवलोके द्वितीयञ्च तव रूपं भविष्यति ॥ १६ ॥
ये च त्वां पूजयिष्यन्ति चतुर्थ्यां त्वद्दिने नराः ।
रूपमारोग्यमैश्वर्यं तेष्वनन्तं भविष्यति ॥ १७ ॥
एवमुक्तस्तदा शान्तिं समगमत्कामरूपधृक् ।
स स्नातमात्क्षणाद्राजन् ! ग्रहत्वमगमत् पुनः ॥ १८
स कदाचित् भवांस्तस्य पूजार्थादिकमुत्तमम् ।
दृष्टवान् क्रियमाणञ्च शूद्रेण च व्यवस्थितः ! ॥ १९ ।
तेन त्वं रूपवान् जातः सुरम्यनृकुलोद्वह ! ।
विविधा च रुचिर्जाता यस्मात्तव त्रिदूरगा ॥ २० ॥
दिरोचन इति प्राहुर्यस्मात् त्वां देवदानवाः ।

अवगाढे ह्युभयतः समुद्रौ पूर्वपश्चिमौ ॥ ६५ ॥
सरो विष्णुपदं नाम निषधे पर्वतोत्तमे ।
यस्मादेषा प्रभवति गन्धर्वानुकुले च ते ॥ ६६ ॥
मेरोः पार्श्वात् प्रभवति ह्रदश्चन्द्रप्रभो महान् ।
जम्बूश्चैव नदी पुण्या यस्यां जाम्बूनदं स्मृतम् ॥ ६७ ॥
पयोदश्च ह्रदो नीलः स शुभः पुण्डरीकवान् ।
पुण्डरीकात् पयोदाच्च तस्माद्द्वे सम्प्रसूयताम् ॥ ६८ ॥
सरसस्तु सरस्त्वेतत् स्मृतमुत्तरमानसम् ।
मृग्या च मृगकान्ता च तस्माद्द्वे सम्प्रसूयताम् ॥ ६९ ॥
ह्रदाः कुरुषु विख्याताः पद्ममीनकुलाकुलाः ।
नाम्ना ते वै जया नाम द्वादशोदधिसन्निभाः ॥ ७० ॥
तेभ्यः शान्ती च मध्वी च द्वे नद्यौ सम्प्रसूयताम् ।
किंपुरुषाद्यानि यान्यष्टौ तेषु देवो न वर्षति ॥ ७१ ॥
उद्भिदान्युदकान्यत्र प्रवहन्ति सरिद्वराः ।
बलाहकश्च ऋषभो चक्रो मैनाक एव च ॥ ७२ ॥
विनिविष्टाः प्रतिदिशं निमग्ना लवणाम्बुधिम् ।
चन्द्रकान्तस्तथा द्रोणः सुमहांश्च शिलोच्चयः ॥ ७३ ॥
उदगायता उदीच्यान्तु अवगाढा महोदधिम् ।
चक्रो बधिरकश्चैव तथा नारदपर्वतः ॥ ७४ ॥
प्रतीचीमायतास्ते वै प्रतिष्ठास्ते महोदधिम् ।
जीमूतो द्रावणश्चैव मैनाकश्चन्द्रपर्वतः ॥ ७५ ॥
आयतास्ते महाशैलाः समुद्रं दक्षिणम्प्रति ।
चक्रमैनाकयोर्मध्ये दिवि संदक्षिणापथे ॥ ७६ ॥
तत्र संवर्तको नाम सोऽग्निः पिबति तज्जलम् ।

अग्निः समुद्रवासस्तु और्वोऽसौ वडवामुखः ॥ ७७ ॥
इत्येते पर्वता विष्टाश्चत्वारो लवणोदधिम् ।
छिद्यमानेषु पक्षेषु पुरा इन्द्रस्य वै भयात् ॥ ७८ ॥
तेषान्तु दृश्यते चन्द्रे शुक्ले कृष्णे समाप्लुतिः ।
ते भारतस्य वर्षस्य भेदा येन प्रकीर्तिताः ॥ ७९ ॥
इहोदितस्य दृश्यन्ते अन्ये त्वन्यत्र चोदिताः ।
उत्तरोत्तरमेतेषां वर्षमुद्रिच्यते गुणैः ॥ ८० ॥
आरोग्यायुःप्रमाणाभ्यां धर्मतः कामतोऽर्थतः ।
समन्वितानि भूतानि तेषु वर्षेषु भागशः ॥ ८१ ॥
वसन्ति नानाजातीनि तेषु सर्वेषु तानि वै ।
इत्येतद्धारयद्विश्वं पृथ्वी जगदिदं स्थिता ॥ ८२ ॥

---

अथ एकविंशत्यधिकशततमोऽध्यायः ।

सूत उवाच । शाकद्वीपस्य वक्ष्यामि यथावदिह निश्चयम् ।
कथ्यमानं निबोधध्वं शाकं द्वीपं द्विजोत्तमाः ! ॥ १ ।
जम्बूद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः ।
विस्तारात् त्रिगुणश्चापि परीणाहः समन्ततः ॥ २ ॥
तेनावृतः समुद्रोऽयं द्वितीयो लवणोदकः ।
तत्र पुण्या जनपदा चिराच्च म्रियते जनः ॥ ३ ॥
कुत एव च दुर्भिक्षं क्षमातेजोयुतेष्विह ।
तत्रापि पर्वताः शुभ्राः सप्तैव मणिभूषिताः ॥ ४ ॥
शाकद्वीपादिषु त्वेषु सप्त सप्त नगास्त्रिषु ।
ऋज्वायताः प्रतिदिशं निविष्टाः पर्वतोत्तमाः ॥ ५ ॥
रत्नाकराद्रिनामानः सानुमन्तो महाचिताः ।

समोदिताः प्रतिदिशं द्वीपविस्तारमानतः ॥ ६ ॥
उभयत्रावगाढौ च लवणक्षीरसागरौ।
शाकद्वीपे तु वक्ष्यामि सप्त दिव्यान् महाचलान् ॥७॥
देवर्षिगन्धर्वयुतः प्रथमो मेरुरुच्यते।
प्रागायतः स सौवर्ण उदयो नाम पर्वतः ॥८ ॥
तत्र मेघास्तु वृष्ट्यर्थं प्रभवन्त्यपयान्ति च।
तस्यापरेण सुमहान् जलधारो महागिरिः ॥ ९ ॥
स वै चन्द्रः समाख्यातः सर्वौषधिसमन्वितः।
तस्मान्नित्यमुपादत्ते वासवः परमञ्जलम् ॥ १० ॥
नारदो नाम चैवोक्तो दुर्गशैलो महाचितः।
तत्राचलौ समुत्पन्नौ पूर्वं नारदपर्वतौ ॥ ११ ॥
तस्यापरेण सुमहान् श्यामो नाम महागिरिः।
यत्र श्यामत्वमापन्नाः प्रजाः पूर्वमिमाः किल ॥ १२ ॥
स एव दुन्दुभिर्नाम श्यामपर्वतसन्निभः।
शब्दमृत्युः पुरा तस्मिन् दुन्दुभिस्ताडितः सुरैः ॥ १३॥
रत्नमालान्तरमयः शाल्मलश्चान्तरालकृत्।
तस्यापरेण रजतो महानस्तोगिरिः स्मृतः ॥ १४ ॥
स वै सोमक इत्युक्तो देवैर्यत्रामृतं पुरा।
संभृतश्च हृतश्चैव मातुरर्थे गरुत्मता ॥ १५ ॥
तस्यापरे चाम्बिकेयः सुमनाश्चैव स स्मृतः।
हिरण्याक्षो वराहेण तस्मिन् शैले निषूदितः ॥१६॥
आम्बिकेयात् परो रम्यः सर्वौषधिनिषेवितः।
विभ्राजस्तु समाख्यातः स्फाटिकस्तु महान् गिरिः ॥१७
यस्माद्विभ्राजते वह्निर्विभ्राजस्तेन स स्मृतः।

सैवेह कैतवेत्युक्तो यतो वायुः प्रवाति च ॥ १८ ॥
तेषां वर्षाणि वक्ष्यामि पर्वतानां द्विजोत्तमाः ! ।
शृणुध्वं नामतस्तानि यथावदनुपूर्वशः ॥ १९ ॥
द्विनामान्येव वर्षाणि यथैव गिरयस्तथा ।
उदयस्योदयं वर्षं जलधारेति विश्रुतम् ॥ २० ॥
नाम्नागतभयं नाम वर्षं तत् प्रथमं स्मृतम् ।
द्वितीयं जलधारस्य सुकुमारमिति स्मृतम् ॥ २१ ॥
तदेव शैशिरं नाम वर्षं तत् परिकीर्त्तितम् ।
नारदस्य च कौमारस्तदेव च सुखोदयम् ॥ २२ ॥
श्यामपर्वतवर्षं तदनीचकमिति स्मृतम् ।
आनन्दकमिति प्रोक्तं तदेव मुनिभिः शुभम् ॥ २३ ॥
सोमकस्य शुभं वर्षं विज्ञेयं कुसुमोत्करम् ।
तदेवासितमित्युक्तं वर्षं सोमकसंज्ञितम् ॥ २४ ॥
आम्बिकेयस्य मैनाकं क्षेमकञ्चैव तत् स्मृतम् ।
तदेव ध्रुवमित्युक्तं वर्षं विभ्राजसंज्ञितम् ॥ २५ ॥
द्वीपस्य परिणाहञ्च ह्रस्वदीर्घत्वमेव च ।
जम्बूद्वीपेन संख्यातं तस्य मध्ये वनस्पतिम् ॥ २६ ॥
शाको नाम महावृक्षः प्रजास्तस्य महानुगाः ।
एतेषु देवगन्धर्वाः सिद्धाश्च सह चारणैः ॥ २७ ॥
विहरन्ति रमन्ते च दृश्यमानाश्च तैः सह ।
तत्र पुण्या जनपदाश्चातुर्वर्ण्यसमन्विताः ॥ २८ ॥
तेषु नद्यश्च सप्तैव प्रतिवर्षं समुद्रगाः ।
द्विनाम्ना चैव ताः सर्वा गङ्गा सप्तविधा स्मृता ॥ २९
प्रथमा सुकुमारीति गङ्गा शिवजला शुभा ।

सुमितसा च नाम्नैषा नदी सम्परिकीर्त्तिता ॥ २० ॥
सुकुमारी तपःसिद्धा द्वितीया नामतः सती।
नन्दा च पावनी चैव तृतीया परिकीर्त्तिता ॥ ३१ ॥
शिविका च चतुर्थी स्यात् द्विविधा च पुनः स्मृता।
इक्षुश्च पञ्चमी ज्ञेया तथैव च पुनः कुहूः ॥ ३२ ॥
वेणुका चामृता चैव षष्ठी सम्परिकीर्त्तिता।
सुकृता च गभस्ती च सप्तमी परिकीर्त्तिता ॥ ३३ ॥
एताः सप्त महाभागाः प्रतिवर्षं शिवोदकाः।
भावयन्ति जनं सर्वं शाकद्वीपनिवासिनम् ॥ ३४ ॥
अभिगच्छन्ति ताश्चान्या नदनद्यः सरांसि च।
बहूदकपरिस्रावा यतो वर्षति वासवः ॥ ३५ ॥
तासान्तु नामधेयानि परिमाणं तथैव च।
न शक्यं परिसंख्यातुं पुण्यास्ता सरिदुत्तमाः ॥३६॥
ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते।
एते शान्तभयाः प्रोक्ताः प्रमोदा ये च वै शिवाः ॥ ३७ ॥
आनन्दाश्च सुखाश्चैव क्षेमकाश्च नवैः सह।
वर्णाश्रमाचारयुता देशास्ते सप्त विश्रुताः ॥ ३८ ॥
आरोग्या बलिनश्चैव सर्वे मरणवर्जिताः।
अवसर्पिणी न तेष्वस्ति तथैवोत्सर्पिणी पुनः ॥ ३९ ॥
न तत्रास्ति युगावस्था चतुर्युगकृता क्वचित्।
त्रेतायुगसमः कालस्तथा तत्र प्रवर्त्तते ॥ ४० ॥
शाकद्वीपादिषु ज्ञेयं पञ्चस्वेतेषु सर्वशः।
देशस्य तु विचारेण कालः स्वाभाविकः स्मृतः ॥४१॥
न तेषु सङ्करः कश्चित् वर्णाश्रमकृतः क्वचित्।

धर्मस्य चाप्यभीचारादेकान्तसुखिनः प्रजाः ॥ ४२ ॥
न तेषु माया लोभो वा ईर्ष्यासूया भयं कुतः ।
विपर्ययो न तेष्वस्ति तद्वै स्वाभाविकं स्मृतम् ॥ ४३ ॥
कालो नैव च तेष्वस्ति न दण्डो न च दाण्डिकः ।
स्वधर्मेण च धर्मज्ञास्ते रक्षन्ति परस्परम् ॥ ४४ ॥
परिमण्डलस्तु सुमहान् द्वीपो वै कुशसंज्ञकः ।
नदीजलैः परिवृतः पर्वतैश्चाभ्रसन्निभैः ॥ ४५ ॥
सर्वधातुविचित्रैश्च मणिविद्रुमभूषितैः ।
अन्यैश्च विविधाकारै रम्यैर्जनपदैस्तथा ॥ ४६ ॥
वृक्षैः पुष्पफलोपेतैः सर्वतो धनधान्यवान् ।
नित्यं पुष्पफलोपेतः सर्वरत्नसमावृतः ॥ ४७ ॥
आवृतः पशुभिः सर्वैर्ग्रामारण्यैश्च सर्वशः ।
आनुपूर्वात् समासेन कुशद्वीपं निबोधत ॥ ४८ ॥
अथ तृतीयं वक्ष्यामि कुशद्वीपस्य तत्त्वतः ।
कुशद्वीपेन क्षीरोदः सर्वतः परिवारितः ॥ ४९ ॥
शाकद्वीपस्य विस्ताराद्द्विगुणेन समन्वितः ।
तत्रापि पर्वताः सप्त विज्ञेया रत्नयोनयः ॥ ५० ॥
रत्नाकरास्तथा नद्यस्तेषां नामानि मे शृणु ।
द्विनामानश्च ते सर्वे शाकद्वीपे यथा तथा ॥ ५१ ॥
प्रथमः सूर्यसङ्काशः कुमुदो नाम पर्वतः ।
विद्रुमोच्चय इत्युक्तः स एव च महीधरः ॥ ५२ ॥
सर्वधातुमयैः शृङ्गैः शिलाजालसमन्वितैः ।
द्वितीयः पर्वतस्तत्र उन्नतो नाम विश्रुतः ॥ ५३ ॥
हेमपर्वत इत्युक्तः स एव च महीधरः ।

हरितालमयैः शृङ्गै र्द्वीपमावृत्य सर्वशः ॥ ५४ ॥
बलाहकस्तृतीयस्तु जात्यञ्जनमयो गिरिः ।
द्युतिमान्नामतः प्रोक्तः स एव च महीधरः ॥ ५५ ॥
चतुर्थः पर्वतो द्रोणो यत्रौषध्यो महागिरौ ।
विशल्यकरणी चैव मृतसञ्जीवनी तथा ॥ ५६ ॥
पुष्पवान्नाम सैवोक्तः पर्वतः सुमहाचितः ।
कङ्कस्तु पञ्चमस्तेषां पर्वतो नाम सारवान् ॥ ५७ ॥
कुशेशय इति प्रोक्तः पुनः स पृथिवीधरः ।
दिव्यपुष्पफलोपेतो दिव्यवीरुत्समन्वितः ॥ ५८ ॥
षष्ठस्तु पर्वतस्तत्र महिषो मेघसन्निभः ।
स एव तु पुनः प्रोक्तो हरिरित्यभिविश्रुतः ॥ ५९ ॥
तस्मिन् सोऽग्निर्निवसति महिषो नाम योऽप्सुजः ।
सप्तमः पर्वतस्तत्र ककुद्मान् स हि भाषते ॥ ६० ॥
मन्दरः सैव विज्ञेयः सर्वधातुमयः शुभः ।
मन्द इत्येष यो धातुरपामर्थे प्रकाशकः ॥ ६१ ॥
अपां विदारणाच्चैव मन्दरः स निगद्यते ।
तत्र रत्नान्यनेकानि स्वयं रक्षति वासवः ॥ ६२ ॥
प्रजापतिमुपादाय प्रजाभ्यो विदधत् स्वयम् ।
तेषामन्तरविष्कम्भो द्विगुणः समुदाहृतः ॥ ६२ ॥
इत्येते पर्वताः सप्त कुशद्वीपे प्रभाषिताः ।
तेषां वर्षाणि वक्ष्यामि सप्तैव तु विभागशः ॥ ६४ ॥
कुमुदस्य स्मृतः श्वेत उन्नतस्यैव स स्मृतः ।
उन्नतस्य तु विज्ञेयं वर्षं लोहितसंज्ञकम् ॥ ६५ ॥
वेणुमण्डलकञ्चैव तथैव परिकीर्त्तितम् ।

बलाहकस्य जीमूतः स्वैरथाकारमित्यपि ॥ ६६ ॥
द्रोणस्य हरिकं नाम लवणस्य पुनः स्मृतम् ।
कङ्कस्यापि ककुन्नाम धृतिमच्चैव तत् स्मृतम् ॥ ६७ ॥
महिषं महिषस्यापि पुनश्चापि प्रभाकरम् ।
ककुद्मिनस्तु तद्वर्षं कपिलं नाम विश्रुतम् ॥ ६८ ॥
एतान्यपि विशिष्टानि सप्त सप्त पृथक् पृथक् ।
वर्षाणि पर्वताश्चैव नदीस्तेषु निबोधत ॥ ६९ ॥
तत्रापि नद्यः सप्तैव प्रतिवर्षं हि ताः स्मृताः ।
द्विनामवत्यस्ताः सर्वाः सर्वाः पुण्यजलाः स्मृताः ॥७०॥
धूतपापा नदी नाम योनिश्चैव पुनः स्मृता।
सीता द्वितीया निशा या या चैव हि निम्ना स्मृता॥ ७१॥
पवित्रा तृतीया ज्ञेया वितृष्णापि च या पुनः ।
चतुर्थी ह्लादिनीत्युक्ता चन्द्रभा इति च स्मृता ॥ ७२ ॥
विद्युच्च पञ्चमी प्रोक्ता शुक्ला चैव विभाव्यते ।
पुण्ड्रा षष्ठी तु विज्ञेया पुनश्चैव विभावती ॥ ७३ ॥
महती सप्तमी प्रोक्ता पुनश्चैषा धृतिः स्मृता ।
अन्यास्ताभ्योऽपि सञ्जाताः शतशोऽथ सहस्रशः ॥७४॥
अभिगच्छन्ति ता नद्यो यतो वर्षति वासवः।
इत्येष सन्निवेशोवः कुशद्वीपस्य वर्णितः ॥ ७५ ॥
शाकद्वीपेन विस्तारः प्रोक्तस्तस्य सनातनः ।
कुशद्वीपः समुद्रेण घृतमण्डोदकेन च ॥ ७६ ॥
सर्वतः सुमहान् द्वीपश्चन्द्रवत् परिवेष्टितः ।
विस्तारान्मण्डलाच्चैव क्षीरोदाद्द्विगुणो मतः ॥७७॥
ततः परं प्रवक्ष्यामि क्रौञ्चद्वीपं यथा तथा ।

कुशद्वीपस्य विस्ताराद्द्विगुणस्तस्य विस्तरः ॥ ७८ ॥
घृतोदकः समुद्रो वै क्रौञ्चद्वीपेन संवृतः।
चक्रनेमिप्रमाणेन वृतो वृत्तेन सर्वशः ॥ ७९ ॥
तस्मिन् द्वीपे नगाः श्रेष्ठा देवनो गिरिरुच्यते।
देवनात्परतश्चापि गोविन्दो नाम पर्वतः ॥ ७९ ॥
गोविन्दात् परतश्चापि क्रौञ्चस्तु प्रथमो गिरिः।
क्रौञ्चात्परे पावनकः पावनादन्धकारकः ॥ ८० ॥
अन्धकारात्परे चापि देवावृन्नाम पर्वतः।
देवावृतः परेणापि पुण्डरीको महान् गिरिः ॥ ८१ ॥
एते रत्नमयाः सप्त क्रौञ्चद्वीपस्य पर्वताः।
परस्परस्य द्विगुणो विष्कम्भो वर्षपर्वतः ॥ ८२ ॥
वर्षाणि तस्य वक्ष्यामि नामतस्तु निबोधत।
क्रौञ्चस्य कुशलो देशो वामनस्य मनोऽनुगः ॥ ८३ ॥
मनोऽनुगात्परे चोष्णस्तृतीयोऽपि स उच्यते।
उष्णात्परे पावनकः पावनादन्धकारकः ॥ ८४ ॥
अन्धकारकदेशात्तु मुनिदेशस्तथापरः।
मुनिदेशात् परे चापि प्रोच्यते दुन्दुभिस्वनः ॥ ८५ ॥
सिद्धचारणसंकीर्णो गौरप्रायः शुचिर्जनः।
श्रुतास्तत्रैव नद्यस्तु प्रतिवर्षङ्गताः शुभाः ॥ ८६ ॥
गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा।
ख्याती च पुण्डरीका च गङ्गाः सप्तविधाः स्मृताः ॥ ८७ ॥
तासां सहस्रशश्चान्या नद्यः पार्श्वसमीपगाः।
अभिगच्छन्ति ता नद्यो बहुलाश्च बहूदकाः ॥ ८८ ॥
तेषां निसर्गो देशानामानुपूर्व्येण सर्वशः।

न शक्यो विस्तराद्वक्तुमपि वर्षशतैरपि ॥ ८९ ॥
सर्गो यश्च प्रजानान्तु संहारो यश्च तेषु वै ।
अत ऊर्द्ध्वं प्रवक्ष्यामि शाल्मलस्य निबोधत ॥ ९० ॥
शाल्मलो द्विगुणो द्वीपः क्रौञ्चद्वीपस्य विस्तरात् ।
परिवार्य्य समुद्रन्तु दधिमण्डोदकं स्थितम् ॥ ९१ ॥
तत्र पुण्या जनपदाश्चिराच्च म्रियते जनः ।
कुत एव तु दुर्भिक्षं क्षमातेजोयुता हि ते ॥ ९२ ॥
प्रथमः सूर्य्यसङ्काशः सुमना नाम पर्वतः ।
पीतस्तु मध्यमश्चासीत्ततः कुम्भमयो गिरिः ॥ ९३ ॥
नाम्ना सर्वसुखो नाम दिव्यौषधिसमन्वितः ।
तृतीयश्चैव सौवर्णो भृङ्गपत्रनिभो गिरिः ॥ ९४ ॥
सुमहान् रोहितो नाम दिव्यो गिरिवरो हि सः ।
सुमनाः कुशली देशः सुखोदर्कः सुखोदयः ॥ ९५ ॥
रोहितो यस्तृतीयस्तु रोहिणो नाम विश्रुतः ।
तत्र रत्नान्यनेकानि स्वयं रक्षति वासवः ॥ ९६ ॥
प्रजापतिमुपादाय प्रभवो विदधत् स्वयम् ।
न तत्र मेघा वर्षन्ति शीतोष्णञ्च न तद्विधम् ॥ ९७ ॥
वर्णाश्रमाणां वार्ता वा त्रिषु द्वीपेषु विद्यते ।
न ग्रहोन च चन्द्रोऽस्ति ईर्ष्यासूया भयं तथा ॥ ९८ ॥
उद्भिदान्युदकान्यत्र गिरिप्रस्रवणानि च ।
भोजनं षड्रसं तत्र तेषां स्वयमुपस्थितम् ॥ ९९ ॥
अधर्मोत्तमं न तेष्वस्ति न लोभो न परिग्रहः ।
आरोग्यबलवन्तश्च एकान्तसुखिनो नराः ॥ १०० ॥
त्रिंशद्वर्षसहस्राणि मानसीं सिद्धिमास्थिताः ।

सुखमायुश्च रूपञ्च धर्मैश्वर्य्यंस्तथैव च ॥ १०१ ॥
शाल्मलान्ते तु विज्ञेयं द्वीपेषु त्रिषु सर्वतः ।
व्याख्यातः शाल्मलान्तानां द्वीपानान्तु विधिः शुभः॥१०२
परिमण्डलस्तु द्वीपस्य चक्रवत् परिवेष्टितः ।
सुरोदेन समुद्रेण द्विगुणेन समन्वितः ॥ १०३ ॥

---

द्वाविंशत्यधिकशततमोऽध्यायः ।

सूत उवाच । गोमेदकं प्रवक्ष्यामि षष्ठं द्वीपं तपोधनाः ! ।
सुरोदकसमुद्रस्तु गोमेदेन समावृतः ॥ १ ॥
शाल्मलस्य तु विस्तारात् द्विगुणस्तस्य विस्तरः ।
तस्मिन् द्वीपे तु विज्ञेयौ पर्वतौ द्वौ समाहितौ ॥२॥
प्रथमः सुमना नाम जात्यञ्जनमयो गिरिः ।
द्वितीयः कुमुदो नाम सर्वौषधिसमन्वितः ॥ ३ ॥
शातकौम्भमयः श्रीमान् विज्ञेयः सुमहाचितः ।
समुद्रे सुरसोदेन वृतो गोमेदकश्च सः ॥ ४ ॥
षष्ठेन तु समुद्रेण सुरोदाद् द्विगुणेन च ।
धातकी कुमुदश्चैव द्व्यपुत्रौ सुविस्तृतौ ॥ ५ ॥
सौमनं प्रथमं वर्षं धातकीखण्डमुच्यते ।
धातकिनः स्मृतं तद्वै प्रथमं प्रथमस्य तु ॥ ६ ॥
गोमेदं यत् स्मृतं वर्षं नाम्ना सर्वसुखन्तु तत् ।
कुमुदस्य द्वितीयस्य द्वितीयं कुमुदं ततः ॥ ७ ॥
एतौ द्वौ पर्वतौ वृत्तौ शेषौ सर्वसमुच्छ्रितौ ।
पूर्वेण तस्य द्वीपस्य सुमनाः पर्वतः स्थितः ॥ ८ ॥

प्राक्पश्चिमायतैः पादैरासमुद्रादिति स्थितः ।
पश्चार्द्धे कुमुदस्तस्य एवमेव स्थितस्तु वै ॥ ९॥
एतैः पर्वतपादैस्तु सदेशो वै द्विधाकृतः ।
दक्षिणार्द्धं तु द्वीपस्य धातकीखण्डमुच्यते ॥ १० ॥
कुमुदस्तूत्तरे तस्य द्वितीयं वर्षमुत्तमम् ।
एतौ जनपदौ द्वौ तु गोमेदस्य तु विस्तृतौ ॥ ११ ॥
अतःपरं प्रवक्ष्यामि सप्तमं द्वीपमुत्तमम् ।
समुद्रेक्षुरसं चैव गोमेदाद्द्विगुणं हि सः ॥ १२ ॥
आवृत्य तिष्ठति द्वीपः पुष्करः पुष्करैर्वृतः ।
पुष्करेण वृतः श्रीमांश्चित्रसानुर्महागिरिः ॥ १३ ॥
कूटैश्चित्रैर्मणिमयैः शिलाजालसमुद्भवैः ।
द्वीपस्यैव तु पूर्वार्द्धे चित्रसानुः स्थितो महान् ॥ १४॥
परिमण्डलसहस्राणि विस्तीर्णः पञ्चविंशतिः ।
ऊर्द्ध्वं स वै चतुर्विंशद्योजनानां महाबलः ॥ १५ ॥
द्वीपार्द्धस्य परिच्छिन्नः पश्चिमे मानसो गिरिः ।
स्थितो वेलासमीपे तु पूर्णचन्द्र इवोदितः ॥ १६ ॥
योजनानां सहस्राणि सार्द्धं पञ्चाशदुच्छ्रितः ।
तस्य पुत्रो महावीतः पश्चिमार्द्धस्य रक्षिता ॥ १७ ॥
पूर्वार्द्धे पर्वतस्यापि द्विधा देशस्तु स स्मृतः ।
स्वादूदकेनोदधिना पुष्करः परिवारितः ॥ १८ ॥
विस्तारान्मण्डलाच्चैव गोमेदा द्विगुणेन तु ।
त्रिंशद्वर्षसहस्राणि तेषु जीवन्ति मानवाः ॥ १९ ॥
विपर्ययो न तेष्वस्ति एतत् स्वाभाविकं स्मृतम् ।
आरोग्यं सुखबाहुल्यं मानसीं सिद्धिमास्थिताः ॥२०

सुखमायुश्च रूपञ्च त्रिषु द्वीपेषु सर्वशः ।
अधमोत्तमौ न तेष्वासां तुल्यास्ते वीर्य्यरूपतः ॥ २१॥
न तत्र वध्यवधकौ नेर्ष्यासूया भयं तथा ।
न लोभो न च दम्भो वा न च द्वेषः परिग्रहः ॥२२॥
सत्यानृतेन तेष्वासां धर्माधर्मौ तथैव च ।
वर्णाश्रमाणां वार्ता च पाशुपाल्यं वणिक् कृषिः ॥२३॥
त्रयीविद्या दण्डनीतिः शुश्रूषा दण्ड एव च ।
न तत्र वर्षं नद्यो वा शीतोष्णञ्च न विद्यते ॥ २४ ॥
उद्भिदान्युदकानि स्युर्गिरिप्रस्रवणानि च ।
तुल्योत्तरकुरूणान्तु कालस्तत्र तु सर्वदा ॥ २५ ॥
सर्वतः सुखकालोऽसौ जराक्लेशविवर्जितः ।
सर्गस्तु धातकीखण्डे महावीते तथैव च ॥ २६ ॥
एवं द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः
द्वीपस्यानन्तरो यस्तु समुद्रस्तत्समस्तु वै ॥ २७ ॥
एवं द्वीपसमुद्राणां वृद्धिर्ज्ञेया परस्परम्
अपाञ्चैव समुद्रेकात् समुद्र इति संज्ञितः ॥ २८ ॥
ऋषदसन्त्यो वर्षेषु प्रजा यत्र चतुर्विधाः ।
ऋषिरित्येव रमणे वर्षन्ते तेन तेषु वै ॥ २९ ॥
उदयतीन्दौ पूर्वे तु समुद्रः पूर्यते सदा
प्रक्षीयमाणे बहुले क्षीयतेऽस्तमिते च वै ॥ ३० ॥
आपूर्यमाणो ह्युदधिरात्मनैवापि पूर्यते ।
ततो वै क्षीयमाणे तु स्वात्मन्येव ह्यपां क्षयः ॥३१॥
उदयात् पयसां योगात् पुष्णन्त्यापो यथास्वयम् ।
तथा स तु समुद्रोऽपि वर्द्धते शशिनोदये ॥ ३२ ॥

अन्यूनानतिरिक्ताश्च वर्द्धन्त्यापोऽक्रमन्ति च।
उदयेऽस्तमये चेन्दोः पक्षयोः शुक्लकृष्णयोः ॥ ३३ ॥
क्षयवृद्धी समुद्रस्य शशिवृद्धिक्षये तथा।
दशोत्तराणि पञ्चाहुरङ्गुलानां शतानि च ॥ ३४ ॥
अपां वृद्धिः क्षयो दृष्टः समुद्राणान्तु पर्वसु।
द्विरापत्वात् स्मृतो द्वीपो दधनाच्चोदधिः स्मृतः ॥३५॥
अपगीर्णाश्च गिरयो पर्वबन्धाच्च पर्वताः।
शाकद्वीपे तु वैशाकः पर्वतस्तेन चोच्यते ॥ ३६ ॥
कुशद्वीपे कुशस्तम्बो मध्ये जनपदस्य तु।
क्रौञ्चद्वीपे गिरिः क्रौञ्चस्तस्य नाम्ना निगद्यते ॥ ३७ ॥
शाल्मलिः शाल्मलद्वीपे पूज्यते च महाद्रुमः।
गोमेदके तु गोमेदः पर्वतस्तेन चोच्यते ॥ ३८ ॥
न्यग्रोधः पुष्करद्वीपे पद्मवत्तेन सः स्मृतः।
पूज्यते स महादेवैर्ब्रह्मांशो व्यक्तसम्भवः ॥ ३९ ॥
तस्मिन् स वसति ब्रह्मा साध्यैः सार्द्धं प्रजापतिः।
तत्र देवा उपासन्ते त्रयस्त्रिंशन्महर्षिभिः ॥ ४० ॥
स तत्र पूज्यते देवो देवैर्महर्षिसत्तमैः।
जम्बूद्वीपात् प्रवर्त्तन्ते रत्नानि विविधानि च ॥ ४१ ॥
द्वीपेषु तेषु सर्व्वेषु प्रजानां क्रमशस्तु वै।
आर्जवात् ब्रह्मचर्य्येण सत्येन च दमेन च ॥ ४२ ॥
आरोग्यायुःप्रमाणाभ्यां द्विगुणं द्विगुणं ततः।
द्वीपेषु तेषु सर्व्वेषु यथोक्तं वर्षकेषु च ॥ ४३ ॥
गोपायन्ते प्रजास्तत्र सर्व्वैः सहजपक्षितैः।
भोजनञ्चाप्रयत्नेन सदा स्वयमुपस्थितम् ॥ ४४ ॥

षड्रसं तन्महावीर्यं तत्र ते भुञ्जते जनाः ।
परेण पुष्करस्याथ आवृत्यावस्थितो महान् ॥ ४५ ॥
स्वादूदकसमुद्रस्तु स समन्तादवेष्टयत् ।
स्वादूदकस्य परितः शैलस्तु परिमण्डलः ॥ ४६ ॥
प्रकाशश्चाप्रकाशश्च लोकालोकः स उच्यते ।
आलोकस्तत्र चार्वाक् च निरालोकस्ततः परम् ॥४७॥
लोकविस्तारमात्रन्तु पृथिव्यार्द्धन्तु वाह्यतः ।
प्रतिच्छन्नं समन्तात्तु उदकेनावृतं महत् ॥ ४८ ॥
भूमेर्दशगुणाश्चापः समन्तात् पालयन्ति गाम् ।
अद्भ्यो दशगुणश्चाग्निः सर्वतो धारयत्यपः ॥ ४९ ॥
अग्नेर्दशगुणो वायुर्धारयन् ज्योतिराश्रितः ।
तिर्य्यक् च मण्डलो वायुर्भूतान्यावेष्ट्य धारयन् ॥५०॥
दशाधिकं तथाकाशं वायोर्भूतान्यधारयत् ।
भूतादिर्धारयन् व्योम तस्माद्दशगुणस्तु वै ॥ ५१ ॥
भूतादितो दशगुणं महद्भूतान्यधारयत् ।
महत्तत्वं ह्यनन्तेन अव्यक्तेन तु धार्य्यते ॥ ५२ ॥
आधाराधेयभावेन विकारास्ते विकारिणाम् ॥ ५३ ॥
पृथ्व्यादयो विकारास्ते परिच्छिन्नाः परस्परम् ।
परस्पराधिकाश्चैव प्रविष्टाश्च परस्परम् ॥ ५४ ॥
एवं परस्परोत्पन्ना धार्य्यन्ते च परस्परम् ।
यस्मात् प्रविष्टास्तेऽन्योन्यं तस्मात्ते स्थिरतां गताः ।
आसंस्ते ह्यविशेषाश्च विशेषा अन्यवेशनात् ॥ ५५ ॥
पृथ्व्यादयस्तु वाय्वन्ताः परिच्छिन्नास्तु तत्र वै ।
भूतेभ्यः परतस्तेभ्यो ह्यलोकः सर्वतः स्मृतः ॥ ५६ ॥

तथाह्यालोक आकाशे परिच्छिन्नानि सर्वशः ।
पात्रे महति पत्राणि यथा ह्यन्तगतानि च ॥ ५७ ॥
भवन्त्यन्योन्यहीनानि परस्परसमाश्रयात् ।
तथाह्यालोक आकाशे भेदास्त्वन्तर्गता गताः ॥ ५८ ॥
कृतान्येतानि तत्त्वानि अन्योन्यस्याधिकानि तु ।
यावदेतानि तत्त्वानि तावदुत्पत्तिरुच्यते ॥ ५९ ॥
जन्तूनामिह संस्कारो भूतेष्वन्तर्गतेषु वै ।
प्रत्याख्यायेह भूतानि कार्य्योत्पत्तिर्न विद्यते ॥ ६० ॥
तस्मात्परिमिता भेदाः स्मृताः कार्य्यात्मकास्तु वै ।
ते कारणात्मकाश्चैव स्युर्भेदा महदादयः ॥ ६१ ॥
इत्येवं सन्निवेशो यं पृथ्व्याकाशात्मकस्तु भागशः ।
सप्तद्वीपसमुद्राणां याथातथ्येन वै मया ॥ ६२ ॥
विस्तारान् मण्डलाञ्चैव प्रसंख्यानेन चैव हि ।
विश्वरूपं प्रधानस्य परिमाणैकदेशिनः ॥ ६३ ॥
एतावत्सन्निवेशस्तु मया सम्यक् प्रकाशितः ॥ ६४ ॥
एतावदेव श्रोतव्यं सन्निवेशस्य पार्थिव ! ।
अत ऊर्द्ध्वं प्रवक्ष्यामि सूर्य्याचन्द्रमसोर्गतिम् ॥ ६५ ॥

---

अथ त्रयोविंशत्यधिकशततमोऽध्यायः ।

सूत उवाच । अत ऊर्द्ध्वं प्रवक्ष्यामि सूर्य्याचन्द्रमसोर्गतिम् ।
सूर्य्याचन्द्रमसावेतौ भ्राजन्तौ यावदेव तु ॥ १ ॥
सप्तद्वीपसमुद्राणां द्वीपानां भाति विस्तरः ।
विस्तरार्द्धं पृथिव्यास्तु भवेदन्यत्र बाह्यतः ॥ २ ॥
पर्य्यासपरिमाणञ्च चन्द्रादित्यौ प्रकाशतः ।

पर्यासपारिमाण्यात्तु बुधैस्तुल्यं दिवः स्मृतम् ॥ ३ ॥
त्रीन् लोकान् प्रतिसामान्यात् सूर्यो यात्यविलम्बतः।
अचिरात्तु प्रकाशेन अवनात्तु रविः स्मृतः ॥ ४ ॥
भूयो भूयः प्रवक्ष्यामि प्रमाणं चन्द्रसूर्य्ययोः।
महितत्वान् महच्छब्दो ह्यस्मिन्नर्थे निगद्यते ॥
अस्य भारतवर्षस्य विष्कम्भात्तुल्यविस्तृतम्।
मण्डलं भास्करस्याथ योजनैस्तन्निबोधत ॥ ६ ॥
नवयोजनसाहस्रो विस्तारो मण्डलस्य तु।
विस्तारात्त्रिगुणश्चापि परिणाहोऽत्र मण्डले ॥ ७ ॥
विष्कम्भान्मण्डलाच्चैव भास्करादु द्विगुणः शशी।
अतः पृथिव्या वक्ष्यामि प्रमाणं योजनैः पुनः ॥ ८ ॥
सप्तद्वीपसमुद्राया विस्तारो मण्डलस्य तु।
इत्येतदिह संख्यातं पुराणे परिमाणतः ॥ ९ ॥
तद्वक्ष्यामि प्रसंख्याय साम्प्रतञ्चाभिमानिभिः।
अभिमानिनो ह्यतीता ये तुल्यास्ते साम्प्रतैस्त्विह॥१०॥
देवदेवै रतीतास्तु रूपैर्नामभिरेव च।
तस्माद्वै साम्प्रतैर्देवैर्वक्ष्यामि वसुधातलम् ॥ ११ ॥
दिव्यस्य सन्निवेशोवै साम्प्रतैरेव कृत्स्नशः।
शतार्द्धकोटिविस्तारा पृथिवी कृत्स्नशः स्मृता ॥ १२॥
तस्याश्चार्द्धप्रमाणञ्च मेरोश्चैवान्तरोत्तरम्।
मेरोर्मध्ये प्रतिदिशं कोटिरेका तु सा स्मृता ॥१३॥
तथा शतसहस्राणामेकोननवतिं पुनः।
पञ्चाशच्च सहस्राणि पृथिव्यर्द्धस्य विस्तरः ॥ १४ ॥
पृथिव्या विस्तरं कृत्स्नं योजनैस्तान्निबोधत।

तिस्रः कोटयश्च विस्तारात् संख्यातास्तु चतुर्द्दिशम् ॥१५
तथा शतसहस्राणामेकोनाशीति रुच्यते ।
सप्तद्वीपसमुद्रायाः पृथिव्याः स तु विस्तरः ॥ १६ ॥
विस्तारं त्रिगुणञ्चैव पृथिव्यन्तरमण्डलम् ।
गणितं योजनानान्तु कोटयस्त्वेकादश स्मृताः ॥१७॥
तथा शतसहस्राणां सप्तत्रिंशाधिकास्तु ताः ।
इत्येतद्वै प्रसंख्यातं पृथिव्यन्तरमण्डलम् ॥ १८ ॥
तारकासन्निवेशस्य दिवि यावत्तु मण्डलम् ।
पर्य्याप्तसन्निवेशस्य भूमेस्तावत्तु मण्डलम् ॥ १८ ॥
पर्य्याप्तपरिमाणञ्च भूमेस्तुल्यं दिवः स्मृतम् ।
मेरोः प्राच्यां दिशायान्तु मानसोत्तरमूर्द्धनि ॥ १८॥
वस्वैकसारा माहेन्द्री पुण्या हेमपरिष्कृता ।
दक्षिणेन पुनर्मेरोर्मानसस्य तु पृष्ठतः ॥ २० ॥
वैवस्वतो निवसति यमः संयमने पुरे ।
प्रतीच्यान्तु पुनर्मेरोर्मानसस्य तु मूर्द्धनि ॥ २१ ॥
सुषा नाम पुरी रम्या वरुणस्यापि धीमतः ।
दिश्युत्तरायां मेरोस्तु मानसस्यैव मूर्द्धनि ॥ २२ ॥
तुल्या महेन्द्रपुर्य्यापि सोमस्यापि विभावरी ।
मानसोत्तरपृष्ठे तु लोकपालाश्चतुर्द्दिशम् ॥ २३ ॥
स्थिता धर्म्मव्यवस्थार्थं लोकसंरक्षणाय च ।
लोकपालोपरिष्टात्तु सर्व्वतो दक्षिणायने ॥ २४ ॥
काष्ठागतस्य सूर्य्यस्य गतिस्तत्र निबोधत ।
दक्षिणाप्रक्रमे सूर्य्यः क्षिप्तेषुरिव सर्पति ॥ २५ ॥
ज्योतिषाञ्चक्रमादाय सततं परिगच्छति ।

मध्यगश्चामरावत्यां यदा भवति भास्करः ॥ २६ ॥
वैवस्वते संयमने उद्यन् सूर्य्यः प्रदृश्यते।
सुषायामर्द्धरात्रस्तु विभावर्य्यास्तमेति च ॥ २७ ॥
वैवस्वते संयमने मध्याह्ने तु रविर्यदा।
सुषायामथ वारुण्यामुत्तिष्ठन् स तु दृश्यते ॥ २८ ॥
विभावर्य्यामर्द्धरात्रं माहेन्द्र्यामस्तमेव च।
सुषायामथवारुण्यां मध्याह्ने तु रविर्यदा ॥ २९ ॥
विभावर्य्यां सोमपुर्य्यां उत्तिष्ठति विभावसुः।
महेन्द्रस्यामरावत्यामुद्गच्छति दिवाकरः ॥ ३० ॥
अर्द्धरात्रं संयमने वारुण्यामस्तमेति च।
स शीघ्रमेव पर्य्येति भानुरालातचक्रवत् ॥ ३१ ॥
भ्रमन् वै भ्रममाणानि ऋक्षाणि चरते रविः।
एवं चतुर्षु पार्श्वेषु दक्षिणां तेषु सर्पति ॥ ३२ ॥
उदयास्तमिये वा सावुत्तिष्ठति पुनः पुनः।
पूर्वाह्णे चापराह्णे च द्वौ द्वौ देवालयौ तु सः ॥ ३३ ॥
पतत्येकन्तु मध्याह्ने भाभिरेव च रश्मिभिः।
उदितो वर्द्धमानाभिर्मध्याह्ने तपते रविः ॥ ३४ ॥
अतः परं ह्रसन्तीभिर्गोभिरस्तं स गच्छति।
उदयास्तमयाभ्यां च स्मृते पूर्वापरे तु वै ॥ ३५ ॥
यादृक् पुरस्तात्तपति यादृक् पृष्ठे तु पार्श्वयोः।
यत्रोदयस्तु दृश्येत तेषां स उदयः स्मृतः।
प्रणाशं गच्छते यत्र तेषामस्तः स उच्यते।
सर्वेषामुत्तरे मेरुर्लोकालोकस्य दक्षिणे ॥ ३७ ॥
विदूरभावादर्कस्य भूमेरेषा गतस्य च।

अयन्ते रश्मयो यस्मात्तेन रात्रौ न दृश्यते ॥ ३८ ॥
ऊर्द्धं शतसहस्रांशः स्थितस्तत्र प्रदृश्यते ।
एवं पुष्करमध्ये तु यदा भवति भास्करः ॥ ३९ ॥
त्रिंशद्भागञ्च मेदिन्या मुहूर्त्तेन स गच्छति ।
योजनानां सहस्रस्य इमां संख्यां निबोधत ॥ ४० ॥
पूर्णं शतसहस्राणां एकत्रिंशच्च सा स्मृता ।
पञ्चाशच्च सहस्राणि तथान्यान्यधिकानि च ॥ ४१ ॥
मौहूर्त्तिकी गतिर्ह्येषा सूर्य्यस्य तु विधीयते ।
एतेन क्रमयोगेन यदा काष्ठान्तु दक्षिणाम् ॥ ४२ ॥
परिगच्छति सूर्य्योऽसौ मासं काष्ठामुदक् दिनात् ।
मध्येन पुष्करस्याथ भ्रमते दक्षिणायने ॥ ४३ ॥
मानसोत्तरमेरोस्तु अन्तरं त्रिगुणं स्मृतम् ।
सर्वतो दक्षिणायान्तु काष्ठायां तन्निबोधत ॥ ४४ ॥
नवकोटयः प्रसंख्याता योजनैः परिमण्डलम् ।
तथा शतसहस्राणि चत्वारिंशच्च पञ्च च ॥ ४५ ॥
अहोरात्रात् पतङ्गस्य गतिरेषा विधीयते ।
दक्षिणादिङ् निवृत्तोऽसौ विषुवस्थो यदा रविः॥४६॥
क्षीरोदस्य समुद्रस्योत्तरतोऽपि दिशं चरन् ।
मण्डलं विषुवच्चापि योजनैस्तन्निबोधत ॥ ४७ ॥
तिस्रः कोटयस्तु सम्पूर्णा विषुवस्यापि मण्डलम् ।
तथा शतसहस्राणि विंशत्येकाधिकानि तु ॥ ४८ ॥
श्रावणे चोत्तरां काष्ठां चित्रभानुर्यदा भवेत् ।
गोमेदस्य परद्वीपे उत्तराञ्च दिशं चरन् ॥ ४९ ॥
उत्तरायाः प्रमाणन्तु काष्ठाया मण्डलस्य तु ।

दक्षिणोत्तरमध्यानि तानि विन्द्याद्यथाक्रमम् ॥ ५० ॥
स्थानं जरद्गवं मध्ये तथैरावतमुत्तरम्।
वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः ॥ ५१ ॥
नागवीथ्युत्तरा वीथी ह्यजवीथिस्तु दक्षिणा।
उभे आषाढ़मूलन्तु अजवीथ्यादयस्त्रयः ॥ ५२ ॥
अभिजित् पूर्वतः स्वातिर्नागवीथ्युत्तरास्त्रयः।
अश्विनी कृत्तिका याम्या नागवीथ्यस्त्रयः स्मृताः ॥५३॥
रोहिण्यार्द्रा मृगशिरो नागवीथिरिति स्मृता।
पुष्याश्लेषा पुनर्वस्वोर्वीथी चैरावती स्मृता ॥ ५४ ॥
तिस्रस्तु वीथयो ह्येता उत्तरामार्ग उच्यते।
पूर्वे उत्तरफल्गुन्यौ मघा चैवार्षभी भवेत् ॥ ५५ ॥
पूर्वोत्तरप्रोष्ठपदौ गोवीथी रेवती स्मृता।
श्रवणञ्च धनिष्ठा च वारुणञ्च जरद्गवम् ॥ ५६ ॥
एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते।
हस्तश्चित्रा तथा स्वाती ह्यजवीथिरिति स्मृता ॥५७॥
ज्येष्ठा विशाखा मैत्रञ्च मृगवीथी तथोच्यते।
मूलं पूर्वोत्तराषाढ़े वीथी वैश्वानरी भवेत् ॥ ५८ ॥
स्मृतास्तिस्रस्तु वीथ्यास्ता मार्गे वै दक्षिणे पुनः।
काष्ठयोरन्तरञ्चैतद्वक्ष्यते योजनैः पुनः ॥ ५९ ॥
एतच्छतसहस्राणामेकत्रिंशत्तु वै स्मृतम्।
शतानि त्रीणि चान्यानि त्रयस्त्रिंशत्तथैव च ॥ ६० ॥
काष्ठयोरन्तरं ह्येतद्योजनानां प्रकीर्त्तितम्।
काष्ठयोर्लेखयोश्चैव अयने दक्षिणोत्तरे ॥ ६१ ॥
ते वक्ष्यामि प्रसंख्याय योजनैस्तु निबोधत।

एकैकमन्तरं तद्वद्युक्तान्येतानि सप्तभिः ६२ ॥
सहस्रेणातिरिक्ता च ततोऽन्या पञ्चविंशतिः ।
लेखयोः काष्ठयोश्चैव बाह्याभ्यन्तरयोश्चरन् ॥ ६३ ॥
अभ्यन्तरं स पर्य्येति मण्डलान्युत्तरायणे ।
बाह्यतो दक्षिणेनैव सततं सूर्य्यमण्डलम् ॥ ६४ ॥
चरन्नसौ वृीच्याञ्च ह्यशीत्या मण्डलान् शतम् ।
अभ्यन्तरं स पर्य्येति क्रमते मण्डलानि तु ॥ ६५ ॥
प्रमाणं मण्डलस्यापि योजनानान्निबोधत ।
योजनानां सहस्राणि दश चाष्टौ तथा कृतम् ॥६६॥
अधिकान्यष्टपञ्चाशद्योजनानि तु वै पुनः ।
विष्कम्भो मण्डलस्यैव तिर्य्यक् स तु विधीयते ॥६७॥
अहस्तु चरते नाभिः सूर्य्यो वै मण्डलं क्रमात् ।
कुलालचक्रपर्य्यन्तो यथा चन्द्रो रविस्तथा ॥ ६८ ॥
दक्षिणे चक्रवत् सूर्य्ये तथा शीघ्रं निवर्त्तते ।
तस्मात् प्रकृष्टां भूमिं तु कालेनाल्पेन गच्छति ॥६९॥
सूर्य्यो द्वादशभिः शीघ्रं मुहूर्त्तैर्दक्षिणायने ।
त्रयोदशार्द्धं मृक्षाणां मध्ये चरति मण्डलम् ॥ ७० ॥
मुहूर्त्तैस्तानि ऋक्षाणि नक्तमष्टादशैश्चरन् ।
कुलालचक्रमध्यस्थो यथा मन्दं प्रसर्पति ॥ ७१ ॥
उदग्याने तथा सूर्य्यः सर्पते मन्दविक्रमः ।
तस्माद्दीर्घेण कालेन भूमिं सोऽल्पां प्रसर्पति ॥ ७२ ॥
सूर्य्योऽष्टादशभिरह्नो मुहूर्त्तैरुदगायने ॥ ७२ ॥
त्रयोदशानां मध्ये तु ऋक्षाणां चरते रविः ।
मुहूर्त्तैस्तानि ऋक्षाणि रात्रौ द्वादशभिश्चरन् ॥ ७३ ॥

ततो मन्दतरं ताभ्यां चक्रन्तु भ्रमते पुनः।
मृत्पिण्ड इव मध्यस्थो भ्रमतेऽसौ ध्रुव स्तथा॥ ७४॥
मुहूर्तैस्त्रिंशता तावदहोरात्रं ध्रुवो भ्रमन्।
उभयोः काष्ठयोर्मध्ये भ्रमते मण्डलानि तु॥ ७५॥
उत्तरक्रमणेऽर्कस्य दिवा मन्दगतिः स्मृता।
तस्यैव तु पुनर्नक्तं शीघ्रा सूर्य्यस्य वै गतिः॥७६॥
दक्षिणप्रक्रमे वापि दिवा शीघ्रं विधीयते।
गतिः सूर्य्यस्य वै नक्तं मन्दा चापि विधीयते॥७७॥
एवं गतिविशेषेण विभजन् रात्र्यहानि तु।
अजवीथ्यां दक्षिणायां लोकालोकस्य चोत्तरम्॥७८॥
लोकसन्तानतोह्येष वैश्वानरपथाद्बहिः।
व्युष्टिर्यावत् प्रभा सौरी पुष्करात् संप्रवर्तते॥ ७९॥
पार्श्वेभ्यो बाह्यतस्तावल्लोकालोकश्च पर्वतः।
योजनानां सहस्राणि दशोर्द्धं चोच्छ्रितो गिरिः॥८०॥
प्रकाशश्चा प्रकाशश्च पर्वतः परिमण्डलः।
नक्षत्रचन्द्रसूर्याश्च ग्रहास्तारागणैः सह॥ ८१॥
अभ्यन्तरे प्रकाशन्ते लोकालोकस्य वै गिरेः।
एतावानेव लोकस्तु निरालोकस्ततः परम्॥ ८२॥
लोक आलोकने धातुर्निरालोकस्त्वलोकता।
लोकालोकौ तु सन्धत्ते तस्मात् सूर्यः परिभ्रमन्॥८३॥
तस्मात् सन्ध्येति तामाहुरुषाव्युष्टयोर्यथान्तरम्।
उषारात्रिः स्मृता विप्रैर्व्युष्टिश्चापि अहः स्मृतम्॥८४॥
त्रिंशत्कलो मुहूर्तस्तु अहस्ते दशपञ्च च।

काष्ठो द्वाविंशत्यर्भागादिवसानां यथा तु वै ॥ ८५ ॥
सन्ध्या मुहूर्त्तमात्रायां ह्रासवृद्धी तु ते स्मृते ।
लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तागते तु वै ॥ ८६ ॥
प्रातः स्मृतस्ततः कालो भागांश्चाहुस्स पञ्च च ।
तस्मात् प्रातर्गतात् कालात् मुहूर्त्ताः सङ्गवस्त्रयः ॥८७॥
मध्याह्नस्त्रिमुहूर्त्तन्तु तस्मात्कालादनन्तरम् ।
तस्मान्मध्यन्दिनात्कालात् अपराह्न इति स्मृतः ॥८८॥
त्रय एव मुहूर्त्तास्तु काल एष स्मृतो बुधैः ।
अपराह्णव्यतीताच्च कालः सायं स उच्यते ॥ ८९ ॥
दशपञ्च मुहूर्त्ताह्नो मुहूर्त्तास्त्रय एव च ।
दशपञ्च मुहूर्त्तं वै अहस्तु विषुवे स्मृतम् ॥ ९० ॥
वर्द्धत्यतो ह्रसत्येव अयने दक्षिणोत्तरे ।
अहस्तु ग्रसते रात्रिं रात्रिस्तु ग्रसते अहः ॥ ९१ ॥
शरद्वसन्तयोर्मध्यं विषुवन्तु विधीयते ।
आलोकान्तः स्मृतो लोको लोकाच्चालोक उच्यते॥९२॥
लोकपालाः स्थितास्तत्र लोकालोकस्य मध्यतः ।
चत्वारस्ते महात्मानस्तिष्ठन्त्याभूतसंप्लवम् ॥ ९३ ॥
सुधामा चैव वैराजः कर्दमश्च प्रजापतिः ।
हिरण्यरोमा पर्जन्यः केतुमान् राजसश्च सः ॥ ९४॥
निर्द्वन्द्वा निरभीमाना निस्तन्द्रा निष्परिग्रहाः ।
लोकपालाः स्थितास्त्वेते लोकालोके चतुर्दिशम् ॥९५
उत्तरं यदगस्त्यस्य अङ्गं देवर्षिसेवितम् ।
पितृयानः स्मृतः पन्था वैश्वानरपथाद्बहिः ॥ ९६ ॥
तत्रासते प्रजाकामा ऋषयो येऽग्निहोत्रिणः ।

लोकस्य सन्तानकराः पितृयाने पथि स्थिताः ॥९७॥
भूतारम्भकृतं कर्म आशिषश्च विशाम्पते ! ।
प्रारभन्ते लोककामास्तेषां पन्थाः स दक्षिणः ॥ ९८॥
चलितन्ते पुनर्धर्मं स्थापयन्ति युगेयुगे ।
सन्तप्ततपसा चैव मर्यादाभिः श्रुतेन च ॥ ९९ ॥
जायमानास्तु पूर्वे वै पश्चिमानां गृहेषु ते ।
पश्चिमाश्चैव पूर्वेषां जायन्ते निधनेष्विह ॥ १०० ॥
एवमावर्तमानास्ते वर्तन्त्याभूतसंप्लवम् ।
अष्टाशीतिसहस्राणि ऋषीणां गृहमेधिनाम् ॥ १०१ ॥
सवितुर्दक्षिणं मार्गं माश्रित्याभूतसंप्लवम् ।
क्रियावतां प्रसंख्येयषा ये श्मशानानि भेजिरे ॥ १०२ ॥
लोकसंव्यवहारार्थं भूतारम्भकृतेन च ।
इच्छाद्वेषरताच्चैव मैथुनोपगमाच्च वै ॥ १०३ ॥
तथा कामकृतेनेह सेवनाद्विषयस्य च ।
इत्येतैः कारणैः सिद्धाः श्मशानानीह भेजिरे ॥ १०४॥
प्रजैषिणः सप्त ऋषयो द्वापरेष्विह जज्ञिरे ।
सन्ततिन्ते जुगुप्सन्ते तस्मान्मृत्युर्जितस्तु तैः ॥ १०५ ॥
अष्टाशीतिसहस्राणि तेषा मप्यूर्ध्वरेतसाम् ।
उदक् पन्था न पर्यन्त माश्रित्याभूतसंप्लवम् ॥ १०६ ॥
ते सम्प्रयोगाल्लोकस्य मिथुनस्य च वर्जनात् ।
ईर्ष्याद्वेषनिवृत्या च भूतारम्भविवर्जनात् ॥ १०७ ॥
इत्येतैः कारणैः शुद्धैस्तेऽमृतत्वं हि भेजिरे ।
आभूतसंप्लवस्थानाममृतत्वं विभाव्यते ॥ १०८ ॥
त्रैलोक्यस्थितिकालो हि न पुनर्मारगामिनाम् ।

भ्रूणहत्याश्वमेधादिपापपुण्यनिभैः परम् ॥ १०९ ॥
आभूतसंप्लवान्ते तु क्षीयन्ते चोर्ध्वरेतसः ।
ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्रानुसंस्थितः ॥ ११० ॥
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भास्वरम् ।
यत्र गत्वा न शोचन्ति तद्विष्णोः परमम्पदम् ।
धर्मे ध्रुवस्य तिष्ठन्ति ये तु लोकस्य काङ्क्षिणः ॥१११ ॥

---

अथ चतुर्विंशत्यधिकशततमोऽध्यायः ।

एवं श्रुत्वा कथां दिव्यां मब्रुवन् लोमहर्षणिम् ।
सूर्याचन्द्रमसोश्चारं ग्रहाणाञ्चैव सर्वशः ॥ १ ॥
ऋषय ऊचुः । भ्रमन्ति कथमेतानि ज्योतींषि रविमण्डले ।
अव्यूहेनैव सर्वाणि तथा चासङ्करेण वा ॥ २ ॥
कश्च भ्रामयते तानि भ्रमन्ति यदि वा स्वयम् ।
एतद्वेदितुमिच्छामस्ततो निगद सत्तम ! ॥ ३ ॥
सूत उवाच । भूतसंमोहनं ह्येतद्ब्रुवतो मे निबोधत ।
प्रत्यक्षमपि दृश्यं तत् संमोहयति वै प्रजाः ॥ ४ ॥
योऽसौ चतुर्दशर्क्षेषु शिंशुमारो व्यवस्थितः ।
उत्तानपादपुत्रोऽसौ मेढीभूतो ध्रुवो दिवि ॥ ५ ॥
सैष भ्रमन् भ्रामयते चन्द्रादित्यौ ग्रहैः सह ।
भ्रमन्तमनुसर्पन्ति नक्षत्राणि च चक्रवत् ॥ ६ ॥
ध्रुवस्य मनसा यो वै भ्रमते ज्योतिषाङ्गणः ।
वातानीकमयैर्बन्धैर्ध्रुवे बद्धः प्रसर्पति ॥ ७ ॥
तेषां भेदश्च योगश्च तथा कालस्य निश्चयः ।
अस्तोदयास्तथोत्पाता अयने दक्षिणोत्तरे ॥ ८ ॥

विपुवद्ग्रहवणाश्च सर्वमेतत् प्रवेरितम्।
जीमूता नाम ते मेघा यदेभ्यो जीवसम्भवः॥ ९॥
द्वितीय आवहन् वायुर्मेघास्ते त्वभिसंश्रिताः।
इतो योजनमात्राच्च अध्यर्द्धविकृता अपि॥ १०॥
वृष्टिसर्गस्तथा तेषां धाराधारः प्रकीर्तिताः।
पुष्करावर्तका नाम ये मेघाः पक्षसम्भवाः॥ ११॥
शक्रेण पक्षाश्छिन्ना वै पर्वतानां महौजसा।
कामगानां समृद्धानां भूतानां नाशमिच्छताम्॥१२॥
पुष्करा नाम ते पक्षा वृहन्तोयधारिणः।
पुष्करावर्तका नाम कारणेनेह शब्दिताः॥ १३॥
नानारूपधराश्चैव महाघोरस्वराश्च ते।
कल्पान्तवृष्टिकर्तारः कल्पान्ताग्नेर्नियामकाः॥ १४॥
वाग्धारा वहन्ते वै सामृताः कल्पसाधकाः।
यान्यस्याण्डस्य भिन्नस्य प्राकृतान्यभवंस्तदा॥ १५॥
यस्मिन् ब्रह्मा समुत्पन्नश्चतुर्वक्त्रः स्वयं प्रभुः।
तान्येवाण्डकपालानि सर्वे मेघाः प्रकीर्तिताः॥ १६॥
तेषामप्यायनं धूमः सर्वेषामविशेषतः।
तेषां श्रेष्ठश्च पर्जन्यश्चत्वारश्चैव दिग्गजाः॥ १७॥
गजानां पर्वतानाञ्च मेघानां भोगिभिः सह।
कुलमेकं द्विधाभूतं योनिरेका जलं स्मृतम्॥ १८॥
पर्जन्यो दिग्गजाश्चैव हैमन्ते शीतसम्भवम्।
तुषारवर्षं वर्षन्ति सर्वा ह्यन्नविवृद्धये॥ १९॥
षष्ठः परिवहो नाम वायुस्तेषां परायणः।
योऽसौ बिभर्ति भगवन्! गङ्गामाकाशगोचराम्॥२०॥

दिव्यामृतजलां पुण्यां निपपातामिति विश्रुताम् ।
तसत्रा विश्वन्तिमन्तोयं दिग्गजाः पृथुभिः करैः ॥ २१ ॥
शीकरान् सम्प्रमुञ्चन्ति नीहार इति स स्मृतः ।
दक्षिणेन गिरिर्योऽसौ हेमकूट इति स्मृतः ॥ २२ ॥
उदग्धिमवतः शैलस्योत्तरे चैव दक्षिणे ।
पुण्ड्रं नाम समाख्यातं सम्यक् वृष्टिविवृद्धये ॥ २३ ॥
तस्मिन् प्रवर्तते वर्षं तत्तुषारसमुद्भवम् ।
ततो हिमवतो वायुर्हिमं तत्र समुद्भवम् ॥ २४ ॥
आनयत्यात्मवेगेन सिञ्चयानो महागिरिम् ।
हिमवन्तमतिक्रम्य वृष्टिशेषं ततः परम् ॥ २५ ॥
इहाभ्येति ततः पश्चादिदम्भूतविवृद्धये ।
वर्षद्वयं समाख्यातं सम्यग् वृष्टिविवृद्धये ॥ २६ ॥
मेघाश्चाप्यायनं चैव सर्वमेतत् प्रकीर्त्तितम् ।
सूर्य्य एव तु वृष्टीनां स्रष्टा समुपदिश्यते ॥ २७ ॥
वर्षं धर्मं हिमं रात्रिं सन्ध्ये चैव दिनं तथा ।
शुभाशुभफलानीह ध्रुवात् सर्वं प्रवर्त्तते ॥ २८ ॥
ध्रुवेणाधिष्ठिताश्चापः सूर्य्यो वै गृह्य तिष्ठति ।
सर्वभूतशरीरेषु त्वापो ह्यनुषिताश्चयाः ॥ २९ ॥
दह्यमानेषु तेष्वेह जङ्गमस्थावरेषु च ।
धूमभूतास्तु ता ह्यापो निष्क्रामन्तीह सर्वशः ॥ ३० ॥
तेन चाभ्राणि जायन्ते स्थानमभ्रमयं स्मृतम् ।
तेजोभिः सर्वलोकेभ्य आदत्ते रश्मिभिर्जलम् ॥ ३१ ॥
समुद्राद्वायुसंयोगात् वहन्त्यापो गभस्तयः ।
ततस्त्वृतुवशात्काले परिवर्त्तन् दिवाकरः ॥ ३२ ॥

नियच्छन्त्यापो मेघेभ्यः शुक्लाः शुक्लैस्तु रश्मिभिः।
अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः॥ २३॥
ततो वर्षति षण्मासान् सर्वभूतविवृद्धये।
वायुभिस्तनितं चैव विद्युतस्त्वग्निजाः स्मृताः॥२४॥
मेहनाच्च मिहेर्धातोर्मेघत्वं व्यञ्जयन्ति च।
न भ्रश्यन्ते ततोऽप्याप तस्मादभ्रस्य वै स्थितिः।
स्रष्टाऽसौ वृष्टिसर्गस्य ध्रुवेणाधिष्ठितो रविः॥ २५॥
ध्रुवेणाधिष्ठितो वायुर्वृष्टिं संहरते पुनः।
ग्रहान्निसृत्य सूर्य्यात्तु चरते ऋक्षमण्डलम्॥ २६॥
चारस्यान्ते विशत्यर्कं ध्रुवेण समधिष्ठितम्।
अतः सूर्य्यरथस्यापि सन्निवेशं प्रचक्षते॥ २७॥
स्थितेन त्वेकचक्रेण पञ्चारेण त्रिनाभिना।
हिरण्मयेनाणुना वै अष्टचक्रैकनेमिना।
चक्रेण भास्वता सूर्य्यः स्यन्दनेन प्रसर्पिणा॥ २८॥
शतयोजनसाहस्रो विस्तारायाम उच्यते।
द्विगुणा च रथोपस्थादीषा दण्डः प्रमाणतः॥ २९॥
स तस्य ब्रह्मणा सृष्टो रथोह्यर्थवशेन तु।
असङ्गः काञ्चनो दिव्यो युक्तः पवनगैर्हयैः॥ ४०॥
छन्दोभिर्वाजिरूपैस्तैर्यथाचक्रं समास्थितैः।
वारुणस्य रथस्येह लक्षणैः सदृशश्च सः॥ ४१॥
तेनाऽसौ चरति व्योम्नि भास्वाननुदिनन्दिवि।
अथाङ्गानि तु सूर्य्यस्य प्रत्यङ्गानि रथस्य च।
सम्वत्सरस्यावयवैः कल्पितानि यथाक्रमम्॥ ४२॥
अहर्नाभिस्तु सूर्य्यस्य एकचक्रस्य वै स्मृतः।

षडात्संवत्सरास्तस्य नेम्यः षडृतवः स्मृताः ॥४३॥
रात्रिर्वरूथो धर्मश्च ध्वज ऊर्ध्वं व्यवस्थितः।
अक्षकोट्योर्युगान्यस्य आर्त्तवार्द्धाः कलाः स्मृताः ॥४४॥
तस्य काष्ठा स्मृता घोणा दन्तपङ्क्तिः क्षणास्तु वै।
निमेषश्चानुकर्षोऽस्य ईषा चास्य कला स्मृता ॥ ४५ ॥
युगाक्षकोटी ते तस्य अर्थकामा वुभौ स्मृतौ।
सप्ताश्वरूपाश्छन्दांसि वहन्ते वायुरंहसा ॥ ४६ ॥
गायत्री चैव त्रिष्टुप् च जगत्यनुष्टुप् तथैव च।
पङ्क्तिश्च बृहती चैव उष्णिगेव तु सप्तमः ॥ ४७ ॥
चक्रमक्षे निबद्धन्तु ध्रुवे चाक्षः समर्पितः।
सहचक्रो भ्रमत्यक्षः सहाक्षोभ्रमति ध्रुवम् ॥ ४८ ॥
अक्षः सहैव चक्रेण भ्रमतेऽसौ ध्रुवेरितः।
एवमर्थवशात्तस्य सन्निवेशो रथस्य तु ॥ ४९ ॥
तथा संयोगभागेन सिद्धो वै भास्करो रथः।
तेनाऽसौ तरणिर्देवो नभसः सर्पते दिवम् ॥ ५० ॥
युगाक्षकोटी ते तस्य दक्षिणे स्यन्दनस्य तु।
भ्रमतो भ्रमतो रश्मी तौ चक्रयुगयोस्तु वै ॥ ५१ ॥
मण्डलानि भ्रमे तेऽस्य खेचरस्य रथस्य तु।
कुलालचक्रभ्रमवन्मण्डलं सर्वतोदिशम् ॥ ५२ ॥
युगाक्षकोटि ते तस्य वातोर्मीस्यन्दनस्य तु।
संक्रमे ते ध्रुवमहीमण्डले सर्वतोदिशम् ॥ ५३ ॥
भ्रमत स्तस्य रश्मी ते मण्डले तूत्तरायणे।
वर्द्धेते दक्षिणेष्वत्र भ्रमतो मण्डलानि तु ॥ ५४ ॥
युगाक्षकोटी सम्बद्धौ द्वे रश्मीस्यन्दनस्य ते।

ध्रुवेण प्रगृहीतौ तौ रश्मी धारयता रविम् ॥ ५५ ॥
आकृष्यते यदा ते तु ध्रुवेण समधिष्ठिते ।
तदा सोऽभ्यन्तरे सूर्य्यो भ्रमते मण्डलानि तु ॥ ५६ ॥
अशीतिमण्डलशतं काष्ठयोरुभयोश्चरन् ।
ध्रुवेण मुच्यमानेन पुनारश्मियुगेन च ॥ ५७ ॥
तथैव बाह्यतः सूर्य्यो भ्रमते मण्डलानि तु ।
उद्वेष्टयन्वै वेगेन मण्डलानि तु गच्छति ॥ ५८ ॥

---

अथ पञ्चविंशत्यधिकशततमोऽध्यायः।

सूत उवाच। स रथोऽधिष्ठितो देवैर्मासि मासि यथाक्रमम् ।
ततो वहत्यथादित्यं बहुभिर्ऋषिभिः सह ॥ १ ॥
गन्धर्वैरप्सरोभिश्च सर्पग्रामणि राक्षसैः ।
एते वसन्ति वै सूर्ये मासौ द्वौ द्वौ क्रमेण च ॥ २ ॥
धातार्यमा पुलस्त्यश्च पुलहश्च प्रजापती ।
उरगौ वासुकिश्चैव सङ्कीर्णश्चैव तावुभौ ॥ ३ ॥
तुम्बुरुर्नारदश्चैव गन्धर्वौ गायताम्वरौ ।
क्रतस्थलाप्सराश्चैव याच सा पुञ्जिकस्थली ॥ ४ ॥
ग्रामण्यौ रथकृत्तस्य रथौजाश्चैव तावुभौ ।
रक्षोहेतिः प्रहेतिश्च यातु धानादुभौ स्मृतौ ॥ ५ ॥
मधुमाधवयोर्ह्येष गणो वसति भास्करे ।
वसन् ग्रीष्मे तु द्वौ मासौ मित्रश्च वरुणश्च वै ॥ ६ ॥
ऋषी अत्रि र्वसिष्ठश्च नागौ तक्षकरम्भकौ ।
मेनका सहजन्या च हाहा हूहूश्च गायकौ ॥ ७ ॥
रथन्तरश्च ग्रामण्यौ रथकृच्चैव ता वुभौ ।

पौरुषेयो बधश्चैव यातुधानौ तु तौ स्मृतौ ॥ ८ ॥
एते वसन्ति वै सूर्ये मासयोः शुचिशुक्रयोः ।
ततः सूर्ये पुनस्त्वन्या निवसन्तिस्म देवताः ॥ ९ ॥
इन्द्रश्चैव विवस्वांश्च अङ्गिरा भृगुरेव च ।
एलापत्रस्तथा सर्पः शङ्खपालश्च पन्नगः ॥ १० ॥
विश्वावसुसुषेणौ च प्रातश्चैव रथश्च हि ।
प्रम्लोचेत्यप्सराश्चैव निम्लोचन्ती च ते उभे ॥ ११ ॥
यातुधानस्तथा हेतिर्व्याघ्रश्चैव तु तावुभौ ।
नभस्य नभसोरेते वसन्तश्च दिवाकरे ॥ १२ ॥
मासौ द्वौ देवताः सूर्ये वसन्ति च शरद्वतौ ।
पर्जन्यश्चैव पूषा च भरद्वाजः सगौतमः ॥ १३ ॥
चित्रसेनश्च गन्धर्वस्तथा वा सुरुचिश्च यः ।
विश्वाची च घृताची च उभे ते पुण्यलक्षणे ॥ १४ ॥
नागश्चैरावतश्चैव विश्रुतश्च धनञ्जयः ।
सेनजिच्च सुषेणश्च सेनानी ग्रामणीस्तथा ॥ १५ ॥
चापोवातश्च द्वावेतौ यातुधाना वुभौ स्मृतौ ।
वसन्त्येते च वै सूर्ये मासयोश्च त्विषोर्जयोः ॥ १६ ॥
हैमन्तिकौ च द्वौ मासौ निवसन्ति दिवाकरे ।
अंशोभगश्च द्वावेतौ कश्यपश्च क्रतुश्च तौ ॥ १७ ॥
भुजङ्गश्च महापत्यसर्पः कर्कोटकस्तथा ।
चित्रसेनश्च गन्धर्वः पूर्णायुश्चैव गायनौ ॥ १८ ॥
अप्सराः पूर्वचित्तिश्च गन्धर्वा ह्युर्वशीच या ।
तक्षा वारिष्टनेमिश्च सेनानीर्ग्रामणीश्च तौ ॥ १९ ॥
विद्युत् सूर्यश्च तावुभौ यातुधानौ तु तौ स्मृतौ ।

सहे चैव सहस्ये च वसन्त्येते दिवाकरे ॥ २० ॥
ततश्च शिशिरे चापि मासयोर्निवसन्ति ते।
त्वष्टा विष्णुर्जमदग्निर्विश्वामित्रस्तथैव च ॥ २१ ॥
काद्रवेयौ तथा नागौ कम्बलाश्वतरा वुभौ।
गन्धर्वौ धृतराष्ट्रश्च सूर्यवर्चाश्च ता वुभौ ॥ २२ ॥
तिलोत्तमाप्सराश्चैव देवी रम्भा मनोरमा।
ग्रामणीरृतजिच्चैव सत्यजिच्च महाबलः ॥ २३ ॥
ब्रह्मोपेतश्च वै रक्षो यज्ञोपेतस्तथैव च।
इत्येते निवसन्तिस्म द्वौ द्वौ मासौ दिवाकरे ॥ २४॥
स्थानाभिमानिनो ह्यत्र ते गणा द्वादशसप्तकाः।
सूर्यमापादयन्त्येते तेजसा तेज उत्तमम् ॥ २५ ॥
ग्रथितैस्तु वचोभिश्च स्तुवन्ति ऋषयो रविम्।
गन्धर्वाप्सरसश्चैव गीतनृत्यैरुपासते ॥ २६ ॥
विद्याग्रामणिनो यक्षाः कुर्वन्त्याभीषु संग्रहम्।
सर्पाः सर्पन्ति वै सूर्य्यं यातुधानानुयान्ति च ॥ २७॥
बालखिल्या नयन्त्यस्तं परिवार्योदयाद्रविम्।
एतेषामेव देवानां यथावीर्य्यं यथा तपः ॥ २८ ॥
यथायोगं यथाधर्मं यथातत्त्वं यथाबलम्।
तथा तपत्यसौ सूर्य्यस्तेषामिद्धस्तु तेजसा ॥ २९ ॥
भूतानामशुभं सर्वं व्यपोहन्ति स्वतेजसा।
मानवानां शुभैर्ह्येते ह्रियते दुरितन्तु वै ॥ ३० ॥
दुरितं शुभचाराणां व्यपोहन्ति क्वचित् क्वचित्।
एते सहैव सूर्येण भ्रमन्ति सानुगा दिवि ॥ ३१ ॥
तपन्तश्च जपन्तश्च ह्लादयन्तश्च वै प्रजाः।

गोपायन्तीह भूतानि ईहन्ते ह्यनुकम्पया ॥ ३२ ॥
स्थानाभिमानिनां ह्येतत् स्थानं मन्वन्तरेषु वै ।
अतीतानागतानाञ्च वर्तन्ते साम्प्रतञ्च ये ॥ ३३ ॥
एवं वसन्ति वै सूर्य्ये सप्तकास्ते चतुर्दश ।
चतुर्दशेषु वर्त्तन्ते गणा मन्वन्तरेषु वै ॥ ३४ ॥
ग्रीष्मे हिमे च वर्षासु च मुञ्चमानो
घर्मं हिमञ्च वर्षञ्च निशां दिनञ्च ।
गच्छत्यसावनुदिनं परिवृत्य रश्मीन्
देवान् पितॄंश्च मनुजांश्च सुतर्पयन्वै ॥ ३५ ॥
शुक्ले च कृष्णे तदहः क्रमेण कालत्रये चैव सुराः पिबन्ति ।
मासेन तच्चामृतमस्य सृष्टं सुतृप्तये रश्मिषु रक्षितं तु ॥३६ ॥
सर्वंऽमृतं तत् पितरः पिबन्ति देवाश्च सौम्याश्च तथैव काव्याः ।
सूर्य्येण गोभिर्हि विवर्द्धिताभिरद्भिः पुनश्चैव समुच्छ्रिताभिः॥३७॥
वृष्ट्याभिवृष्टाभि रथौषधीभिर्मर्त्या अथान्नेन क्षुधं जयन्ति ।
तृप्तिस्त्वाप्यमृतेनार्द्धमासं सुराणां मासे स्वाहाभिः स्वधया पितॄणाम्
अन्नेन जीवन्त्यनिशं मनुष्याः सूर्य्यः श्रितन्तद्धि बिभर्ति गोभिः॥३८॥
इत्येष एकचक्रेण सूर्य्यस्तूर्णं प्रसर्पति ।
तत्र तै रक्रमैरश्वैः सर्पतेऽसौ दिनक्षये ॥ ३९ ॥
हरिर्हरिद्भिर्ह्रियते तुरङ्गमैः पिबत्यथापोऽर्हरिभिः सहस्रधा ।
पुनः प्रमुञ्चत्यथ ताश्च यो हरिः सनुह्यमानो हरिभिस्तुरङ्गमैः॥४०
अहोरात्रं रथेनासावेकचक्रेण वै भ्रमन् ।
सप्तद्वीपसमुद्रांस्तु सप्तभिः सप्तभिर्द्रुतम् ॥ ४१ ॥
छन्दोरूपैश्च तैरश्वैर्यतश्चक्रं ततः स्थितिः ।
कामरूपैः सकृद्युक्तैः कामगैस्तैर्मनोजवैः ॥ ४२ ॥

ह्रियते रथ्यश्वैः पिङ्गैः रौक्मैरश्ववादिभिः।
वाह्यतोऽनन्तरश्चैव मण्डलं दिवसः क्रमात् ॥ ४२ ॥
कल्पादौ सम्प्रयुक्तास्तु वहन्त्याभूतसंप्लवम्।
आवृतो बालखिल्यैश्च भ्रमते रात्र्यहानि तु ॥ ४४ ॥
ग्रथितैः स्ववचोभिश्च स्तूयमानो महर्षिभिः।
सेव्यते गीतनृत्यैश्च गन्धर्वाप्सरसाङ्गणैः ॥ ४५ ॥
पतङ्गैः पतगैरश्वैर्भ्राम्यमाणो दिवस्पतिः।
वीथ्याश्रयाणि चरति नक्षत्राणि तथा शशी ॥ ४६ ॥
ह्रासवृद्धी तथैवास्य रश्मयः सूर्यवत् स्मृताः।
त्रिचक्रो भयतोऽश्वश्च विज्ञेयः शशिनोरथः ॥ ४७ ॥
अपाङ्गर्भसमुत्पन्नो रथः साश्वः ससारथिः।
सहारैस्तैस्त्रिभिश्चक्रैर्युक्तः शुक्लैर्हयोत्तमैः ॥ ४८ ॥
दशभिस्तुरगैर्दिव्यैरसङ्गैस्तैर्मनोजवैः।
सकृद्युक्ते रथे तस्मिन् वहन्तस्त्वायुगक्षयम् ॥ ४९ ॥
संगृहीता रथे तस्मिन् श्वेत चक्षुःश्रवाश्च वै।
अश्वास्तमेक वर्णास्ते वहन्ते शङ्खवर्चसः ॥ ५० ॥
अजश्च त्रिपथश्चैव वृषो वाजी नरो हयः।
अंशुमान् सप्तधातुश्च हंसो व्योम मृग स्तथा ॥ ५१ ॥
इत्येते नामभिश्चैव दश चन्द्रमसो हयाः।
एवं चन्द्रमसं देवं वहन्ति स्मायुगक्षयम् ॥ ५२ ॥
देवैः परिवृतः सोमः पितृभिः सह गच्छति।
सोमस्य शुक्लपक्षादौ भास्करे परतः स्थिते ॥ ५३ ॥
आपूर्यते परो भागः सोमस्य तु अहःक्रमात्।

ततः पीतक्षयं सोमं युगपद्व्यापयन् रविः ॥ ५४ ॥
पीतं पञ्चदशाहञ्च रश्मिनैकेन भास्करः ।
आपूरयन् दहौ तेन भागं भागमहःक्रमात् ॥ ५५ ॥
सुषुम्नाप्यायमानस्य शुक्ले वर्द्धन्ति वै कलाः ।
तस्माद्ध्रसन्ति वै कृष्णे शुक्ले ह्याप्याययन्ति च ॥५६॥
इत्येवं सूर्य्यवीर्य्येण चन्द्रस्याप्यायते तनुः ।
पूर्णमास्यां प्रदृश्येत शुक्लः सम्पूर्णमण्डलः ॥ ५७ ॥
एवमाप्यायते सोमः शुक्लपक्षेष्वहःक्रमात् ।
ततो द्वितीयाप्रभृति बहुलस्य चतुर्दशी ॥ ५८ ॥
अपां सारमयस्येन्दो रसमात्रात्मकस्य च ।
पिबन्त्यम्बुमयं देवा मधुसौम्यं तथामृतम् ॥ ५९ ॥
संभृतन्त्वर्द्धमासेन अमृतं सूर्य्यतेजसा ।
भक्षार्थमागतं सोमं पौर्णमास्यामुपासते ॥ ६० ॥
एकरात्रं सुराः सार्द्धं पितृभिर्ऋषिभिश्च वै ।
सोमस्य कृष्णपक्षादौ भास्कराभिमुखस्य वै ॥ ६१ ॥
प्रक्षीयते परं ह्यात्मा पीयमानकलाक्रमात् ।
त्रयश्च त्रिंशता सार्द्धं त्रयस्त्रिंशच्छतानि तु ॥ ६२ ॥
त्रयस्त्रिंशत्सहस्राणि देवाः सोमं पिबन्ति वै ।
इत्येवं पीयमानस्य कृष्णेवर्द्धन्ति ताः कलाः ॥ ६३ ॥
क्षीयन्ते च ततः शुक्लाः कृष्णाह्याप्याययन्ति च ।
एवं दिनक्रमात् पीते देवैश्चापि निशाकरे ॥ ६४ ॥
पीत्वार्द्धमासं गच्छन्ति अमावास्यां सुराश्च ते ।
पितरश्चोपतिष्ठन्ति अमावास्यां निशाकरम् ॥ ६५ ॥
ततः पञ्चदशे भागे किञ्चिच्छेषे निशाकरे ।

ततोऽपराह्णे पितरो ह्यन्यद्दिवसे पुनः ॥ ६६ ॥
पिबन्ति द्विकलं कालं शिष्टास्तास्तु कलास्तु याः।
विनिःसृष्टं त्वमावास्यां गभस्तिभ्यस्तदामृतम् ॥ ६७ ॥
अर्द्धमाससमाप्तौ तु पीत्वा गच्छन्ति ते मृतम्।
सौम्या बर्हिषदश्चैव अग्निष्वात्ताश्च ये स्मृताः ॥ ६८ ॥
काव्याश्चैव तु ये प्रोक्ताः पितरः सर्व एव ते।
सम्वत्सराश्च ये काव्याः पञ्चाब्दा वै द्विजाः स्मृताः॥६९
सौम्याः सुतपसो ज्ञेया सौमग्रा बर्हिषदस्तथा।
अग्निष्वात्तास्त्रयश्चैव पितृसर्गस्थिता द्विजाः ॥ ७० ॥
पितृभिः पीयमानायां पञ्चदश्यान्तु वै कलाम्।
यावच्च क्षीयते तस्माद् भागः पञ्चदशस्तु सः ॥ ७१ ॥
अमावास्यां तथा तस्य अन्तरा पूर्यते परः।
वृद्धिक्षयौ वै पक्षादौ षोडश्यां शशिनः स्मृतौ।
एवं सूर्यनिमित्ते ते क्षयवृद्धी निशाकरे ॥ ७२ ॥

---

अथ षड्विंशत्यधिकशततमोऽध्यायः।

सूत उवाच। ताराग्रहाणां वक्ष्यामि स्वर्भानोश्च रथं पुनः।
अथ तेजोमयः शुभ्रः सोमपुत्रस्य वै रथः ॥ १ ॥
युक्तो हयैः पिशङ्गैस्तु दशभिर्वातरंहसैः।
श्वेतः पिशङ्गः सारङ्गो नीलः श्यामो विलोहितः ॥२॥
कृष्णश्च हरितश्चैव पृषतो वृष्णिरेव च।
दशभिस्तु महाभागैरकृशैर्वातसम्भवैः ॥ ३ ॥
ततो भौमरथश्चापि अष्टाङ्गः काञ्चनः स्मृतः।
अष्टभिर्लोहितैरश्वैः सध्वजैरग्निसम्भवैः ॥ ४ ॥

सर्पतेऽसौ कुमारो वै ऋजुवक्रानुवक्रगः ।
अतश्चाङ्गिरसो विद्वान् देवाचार्यो बृहस्पतिः ॥ ५ ॥
गौराश्वेन तु दीप्तेन स्यन्दनेन विसर्पति ।
युक्तेनाष्टाभिरश्वैश्च ध्वजैरग्निसमुद्भवैः ॥ ६ ॥
अब्दं वसति यो राशौ स्वदिशन्तेन गच्छति ।
ततः शनैश्चरोऽप्यश्वैः सबलैर्वातरंहसैः ॥ ७ ॥
कार्ष्णायसं समारुह्य स्यन्दनं यात्यसौ शनिः ।
स्वर्भानोश्च तथाष्टाश्वाः कृष्णा वै वातरंहसः ॥ ८ ॥
रथन्तमोमयं तस्य वहन्तिस्म सुदंशिताः ।
आदित्यनिलयो राहुः सोमं गच्छति पर्वसु ॥ ९ ॥
आदित्यमेति सोमाच्च तमसां तेषु पर्वसु ।
ततः केतुमतस्त्वश्वा अष्टौ ते वातरंहसः ॥ १० ॥
पलालधूमवर्णाभाः क्षामदेहाः सुदारुणाः ।
एते वाहा ग्रहाणां वै मया प्रोक्ता रथैः सह ॥ ११ ॥
सर्वे ध्रुवे निबद्धास्ते निबद्धा वातरश्मिभिः ।
एते वै भ्राम्यमाणास्ते यथायोगं वहन्ति वै ॥ १२॥
वायव्याभिरदृश्याभिः प्रबद्धा वातरश्मिभिः ।
परिभ्रमन्ति तद्बद्धाश्चन्द्रसूर्यग्रहा दिवि ॥ १३ ॥
यावन्त ननुपर्येति ध्रुवं वै ज्योतिषाङ्गणः ।
यथा नद्युदके नौस्तु उदकेन सहोह्यते ॥ १४ ॥
तथा देवगृहाणि स्युरुह्यन्ते वातरंहसा ।
तस्माद्यानि प्रदृश्यन्ते व्योम्नि देवगृहा इति ॥१५॥
यावन्त्यश्चैव ताराःस्युस्तावन्तोऽस्य मरीचयः ।
सर्वा ध्रुवनिबद्धास्ता भ्रमन्त्यो भ्रामयन्ति च ॥ १६॥

तैलपीडं यथा चक्रं भ्रमते भ्रामयन्ति वै ।
तथा भ्रमन्ति ज्योतींषि वातबद्धानि सर्वशः ॥ १७ ॥
अलातचक्रवद्यान्ति वातचक्रेरितानि तु ।
यस्मात् प्रवहते तानि प्रवहस्तेन स स्मृतः ॥ १८ ॥
एवं ध्रुवे नियुक्तोऽसौ भ्रमते ज्योतिषाङ्गणः ।
एष तारामयः प्रोक्तः शिशुमारे ध्रुवो दिवि ॥ १९ ॥
यदह्ना कुरुते पापं दृष्ट्वा निशि मुच्यति ।
शिशुमारशरीरस्था यावन्त्यस्तारकास्तु ताः ॥ २० ॥
वर्षाणि दृष्ट्वा जीवेत तावदेवाधिकानि तु ।
शिशुमाराकृतिं ज्ञात्वा प्रविभागेन सर्वशः ॥ २१ ॥
उत्तानपादस्तस्याथ विज्ञेयः सोत्तरा हनुः ।
यज्ञोऽधरस्तु विज्ञेयो धर्मो मूर्द्धानमाश्रितः ॥ २२ ॥
हृदि नारायणः साध्या अश्विनौ पूर्वपादयोः ।
वरुणाश्चार्यमा चैव पश्चिमे तस्य सक्थिनी ॥ २३ ॥
शिश्ने सम्वत्सरो ज्ञेयो मित्रश्चापानमाश्रितः ।
पुच्छेऽग्निश्च महेन्द्रश्च मरीचिः कश्यपो ध्रुवः ॥ २४ ॥
एष तारामयः स्तम्भो नास्तमेति नचोदयम् ।
नक्षत्रचन्द्रसूर्याश्च ग्रहास्तारागणैः सह ॥ २५ ॥
तन्मुखाभिमुखाः सर्वे चक्रभूता दिवि स्थिताः ।
ध्रुवेणाधिष्ठिताश्चैव ध्रुवमेव प्रदक्षिणम् ॥ २६ ॥
परियान्ति सुरश्रेष्ठं मेढीभूतं ध्रुवं दिवि ।
आग्नीध्रकाश्यपानान्तु तेषां स परमो ध्रुवः ॥ २७ ॥
एकएव भ्रमत्येष मेरोरन्तरमूर्द्धनि ।
ज्योतिषाञ्चक्रमादाय चाकर्षंस्तमधोमुखः ॥ २८ ॥

मेरुमालोकयन्नेव प्रति याति प्रदक्षिणम् ।

---

अथ सप्तविंशत्यधिकशततमोऽध्यायः ।

ऋषय ऊचुः । यदेतद्भवता प्रोक्तं श्रुतं सर्वं मयेषतः ।
कथं देवगृहाणि स्युः पुनर्ज्योतींषि वर्णय ॥ १ ॥
सूत उवाच । एतत्सर्वं प्रवक्ष्यामि सूर्य्याचन्द्रमसोर्गतिम् ।
यथा देवगृहाणि स्युः सूर्याचन्द्रमसोस्तथा ॥ २ ॥
अग्नेर्व्युष्टौ रजन्यां वै ब्रह्मणा व्यक्तयोनिना ।
अव्याकृतमिदं त्वासीन्नैशेन तमसावृतम् ॥ ३ ॥
चतुर्भूतावशिष्टेऽस्मिन् ब्रह्मणा समधिष्ठिते ।
स्वयम्भूर्भगवांस्तत्र लोकतत्त्वार्थसाधकः ॥ ४ ॥
खद्योतरूपी विचरन्नाविर्भावं व्यचिन्तयत् ।
ज्ञात्वाग्निं कल्पकालादावपः पृथ्वीञ्च संश्रिताः ॥५॥
स सम्भृत्य प्रकाशार्थन्त्रिधात्वत्वोऽभवत् पुनः ।
पावको यस्तु लोकेऽस्मिन् पार्थिवः सोऽग्निरुच्यते ॥६॥
यश्चासौ तपते सूर्य्ये शुचिरग्निश्च स स्मृतः ।
वैद्युतो जठरः सौम्यो वैद्युतश्चाप्यनिन्धनः ॥ ७ ॥
तेजोभिश्चाप्यते कश्चित् कश्चिदेवाप्यनिन्धनः ।
काष्ठेन्धनस्तु निर्मथ्यः सोऽग्निः शाम्यति पावकः ॥८॥
अर्च्चिष्मान् पवनोऽग्निस्तु निष्प्रभः सौम्यलक्षणः ।
यश्चासौ मण्डले शुक्ले निरूष्मा न प्रकाशते ॥ ९ ॥
प्रभा सौरी तु पादेन अस्तं याति दिवाकरे ।
अग्निमाविशते रात्रौ तस्मादग्निः प्रकाशते ॥ १० ॥
उदिते तु पुनः सूर्य्ये ऊष्माग्नेस्तु समाविशत् ।

पादेन तेजसश्चाग्नेस्तस्मात् सन्तपते दिवा ॥ ११ ॥
प्राकाश्यञ्च तथोष्णञ्च सौर्य्याग्नेये तु तेजसी ।
परस्परानु प्रवेशादाप्यायेते दिवानिशम् ॥ १२ ॥
उत्तरे चैव भूम्यर्द्धे तथा ह्यस्मिंस्तु दक्षिणे ।
उत्तिष्ठति पुनः सूर्य्ये रात्रिमाविशते ह्यपः ॥१३॥
तस्मात्ताम्रा भवन्त्यापो दिवारात्रि प्रवेशनात् ।
अस्तङ्गते पुनः सूर्य्ये अहो वै प्रविशत्यपः ॥ १४ ॥
तस्माच्छुक्लं पुनः शुक्ला ह्यापो दृश्यन्ति भासुराः ।
एतेन क्रमयोगेन भूम्यर्द्धे दक्षिणोत्तरे ॥ १५ ॥
उदयास्तमये ह्यत्र अहोरात्रं विशत्यपः ।
यश्चासौ तपते सूर्य्यः सोऽपः पिबति रश्मिभिः ॥ १६ ॥
सहस्रपादस्त्वेषोऽग्नी रक्तकुम्भनिभस्तु सः ।
आदत्ते स तु नाडीनां सहस्रेण समन्ततः ॥ १८ ॥
आपो नदीसमुद्रेभ्यो ह्रदकूपेभ्य एव च ।
तस्य रश्मिसहस्रेण शीतवर्षोष्णनिःस्रवः ॥ १९ ॥
तासाञ्चतुः शतं नाड्यो वर्षन्ते चित्रमूर्त्तयः ।
चन्दनाश्चैव मेध्याश्च केतनाश्चेतनास्तथा ॥२० ॥
अमृता जीवनाः सर्व्वा रश्मयो वृष्टिसर्ज्जनाः
हिमोद्भवाश्च तान्योन्यं रश्मयस्त्रिंशतः स्मृताः ।
चन्द्रताराग्रहैः सर्व्वैः पीता भानोर्गभस्तयः ॥ २१ ॥
एता मध्यास्तथान्याश्च ह्लादिन्यो हिमसर्ज्जनाः ।
शुक्लाश्च ककुभश्चैव गावो विश्वस्तृतश्च याः ॥ २२ ॥
शुक्लास्ता नामतः सर्व्वास्त्रिंशत्या धर्म्मसर्ज्जनाः ।
सम्बिभर्त्ति हिताः सर्व्वाः मनुष्यान्देवताः पितॄन् ॥२३॥

मनुष्यानौषधीभिश्च स्वधया च पितृनपि ।
अमृतेन सुरान् सर्वान् समस्तम्परि तर्पयन् ॥ २४ ॥
वसन्ते चैव ग्रीष्मे च शनैः सन्तपते त्रिभिः ।
वर्षासु च शरद्येवं चतुर्भिः संप्रवर्षति ॥ २५ ॥
हेमन्ते शिशिरे चैव हिमोत्सर्गस्त्रिभिः पुनः ।
ओषधीषु बलन्धत्ते सुधाञ्च स्वधया पुनः ॥ २६ ॥
सूर्योऽमरत्वममृतं त्रयस्त्रिषु नियच्छति ।
एवं रश्मिसहस्रन्तु सौरं लोकार्थसाधनम् ॥ २७ ॥
भिद्यते ऋतुमासाद्य सहस्रं बहुधा पुनः ।
इत्येवं मण्डलं शुक्लं भास्वरं लोकसंज्ञितम् ॥ २८॥
नक्षत्रग्रहसोमानां प्रतिष्ठायोनिरेव च ।
चन्द्र ऋक्षग्रहाः सर्वे विज्ञेयाः सूर्यसम्भवाः ॥ २९ ॥
सुषुम्णा सूर्यरश्मिर्या क्षीणं शशिनमेधते ।
हरिकेशः पुरस्तात्तु यो वै नक्षत्रयोनिकृत् ॥ ३० ॥
दक्षिणे विश्वकर्मा तु रश्मिराप्याययद्बुधम् ।
विश्वावसुश्च यः पश्चाच्छुक्रयोनिश्च स स्मृतः ॥ ३१ ॥
सम्वर्द्धनस्तु यो रश्मि सयोनिर्लोहितस्य च ।
षष्ठस्तु ह्यश्वभूरश्मिः योनिः स हि बृहस्पतेः ॥ ३२ ॥
शनैश्चरं पुनश्चापि रश्मिराप्यायते सुराट् ।
न क्षीयते यतस्तानि तस्मान्नक्षत्रता स्मृता ॥ ३३ ॥
क्षेत्राण्येतानि वै सूर्यमापतन्ति गभस्तिभिः ।
क्षेत्राणि तेषामादत्ते सूर्यो नक्षत्रता ततः ॥ ३४ ॥
अस्माल्लोकादमुं लोकं तीर्णानां सुकृतात्मनाम् ।
तारणात्तारका ह्येताः शुक्लत्वाच्चैव शुक्लिकाः ॥ ३५ ॥

दिव्यानां पार्थिवानाञ्च वंशानाञ्चैव सर्वशः।
तपसस्तेजसो योगादादित्य इति गद्यते ॥ ३६ ॥
स्रवतिः स्यन्दनार्थे धातुरेष निगद्यते।
स्रवणात्ते जसश्चैव तेनासौ सविता स्मृतः ॥ ३७ ॥
बह्वर्थश्चन्द इत्येष प्रधानो धातुरुच्यते।
शुक्लत्वे ह्यमृतत्वे च शीतत्वे ह्लादनेऽपि च ॥ ३८ ॥
सूर्याचन्द्रमसोर्दिव्ये मण्डले भास्वरे खगे।
जलतेजोमये शुक्ले वृत्तकुम्भनिभे शुभे ॥ ३९ ॥
वसन्ति कर्मदेवास्तु स्थानान्येतानि सर्वशः।
मन्वन्तरेषु सर्वेषु ऋषिसूर्यग्रहादयः ॥ ४० ॥
तानि देवगृहाणि स्युः स्थानाख्यानि भवन्ति हि।
सौरं सूर्योऽविशत् स्थानं सौम्यं सोमस्तथैव च ॥ ४१ ॥
शौक्रं शुक्रोऽविशत् स्थानं षोडशारं प्रभास्वरम्।
बृहस्पतिर्बृहत्त्वञ्च लोहितञ्चापि लोहितः ॥ ४२ ॥
शनैश्चरोऽविशत् स्थानमेवं शानैश्चरं तथा।
बुधोऽपि वै बुधस्थानं भानुं स्वर्भानुरेव च ॥ ४३ ॥
नक्षत्राणि च सर्वाणि नाक्षत्राण्यविशन्ति च।
ज्योतींषि सुकृतामेते ज्ञेया देवगृहास्तु वै ॥ ४४ ॥
स्थानान्येतानि तिष्ठन्ति यावदाभूतसंप्लवम्।
मन्वन्तरेषु सर्वेषु देवस्थानानि तानि वै ॥ ४५ ॥
अभिमानेन तिष्ठन्ति तानि देवाः पुनः पुनः।
अतीतास्तु सहातीतैर्भाव्या भाव्यैः सुरैः सह ॥ ४६ ॥
वर्तन्ते वर्तमानैश्च सुरैः सार्द्धन्तु स्थानिनः।
सूर्यो देवो विवस्वांश्च अष्टमस्त्वदितेः सुतः ॥ ४७ ॥

द्युतिमान् धर्म्मयुक्ताश्च सोमो देवो वसुः स्मृतः ।
शुक्रो दैत्यस्तु विज्ञेयो भार्गवो सुरयाजकः ॥ ४८ ॥
बृहस्पतिर्बृहत्तेजा देवाचार्य्योऽङ्गिरःसुतः ।
बुधो मनोहरश्चैव शशिपुत्त्रस्तु स स्मृतः ॥ ४९ ॥
शनैश्चरो विरूपश्च संज्ञापुत्त्रो विवस्वतः ।
अग्निर्विकेश्यां जज्ञे तु युवाऽसौ लोहिताधिपः ॥५०॥
नक्षत्रनामर्क्षः क्षेत्रेषु दाक्षायण्यः सुताः स्मृताः ।
स्वर्भानुः सिंहिकापुत्त्रो भूतसंसाधनोऽसुरः ॥ ५१ ॥
चन्द्रार्कग्रहनक्षत्रेष्वभिमानी प्रकीर्त्तितः ।
स्थानान्येतानि चोक्तानि स्थानिन्यश्चैव देवताः ॥५२॥
शुक्लमग्निसमं दिव्यं सहस्रांशोर्विवस्वतः ।
सहस्रांशत्विषः स्थानमम्मयन्तैजसं तथा ॥ ५३ ॥
आप्यास्थानं मनोज्ञस्य रवि रश्मिगृहे स्थितम् ।
शुक्लः षोडशरश्मिस्तु यस्तु देवो ह्यपोमयः ॥ ५४ ॥
लोहितो नवरश्मिस्तु स्थानमापस्तु तस्य वै ।
बृहद्द्वादशरश्मीकं हरिद्राभन्तु वेधसः ॥ ५५ ॥
अष्टरश्मिशनेस्तत्तु कृष्णं वृहमयस्मयम् ।
स्वर्भानोस्त्वायसं स्थानं भूतसन्तापनाशयम् ॥ ५६ ॥
मुक्तामाश्रया स्तारा स्थमयस्तु हिरण्मयाः ।
तारणात्तारका ह्येताः शुक्लत्वाच्चैव तारकाः ॥ ५७ ॥
नवयोजनसाहस्रो विष्कम्भः सवितुः स्मृतः ।
मण्डलं त्रिगुणं चास्य विस्तारो भास्करस्य तु ॥५८॥
द्विगुणः सूर्य्यविस्ताराद्विस्तारः शशिनः स्मृतः ।
त्रिगुणं मण्डलं चास्य वैपुल्याच्छशिनः स्मृतम् ॥५९॥

सर्व्वोपरिनिकृष्टानि मण्डलानि तु तारकाः।
योजनार्द्धप्रमाणानि तार्भ्योऽन्यानि गणानि तु ॥६०॥
तस्यो भूत्वा तु स्वर्भानुस्तद्धस्तात्प्रसर्पति।
उद्धृत्य पार्थिवीं च्छायां निर्म्मितां मण्डलाकृतिम् ६१
ब्रह्मणा निर्म्मितं स्थानं तृतीयन्तु तमोमयम्।
आदित्यात्‌ स तु निष्क्रम्य सोमं गच्छति पर्व्वसु॥६२
आदित्यमेति सोमाच्च पुनः सौरेषु पर्व्वसु।
स्वभासा तुदते यस्मात्‌ स्वर्भानुरिति स स्मृतः॥ ६३॥
चन्द्रतः षोडशो भागो भार्गवस्य विधीयते।
विष्कम्भान्मण्डलाच्चैव योजनानान्तु स स्मृतः ॥६४॥
भार्गवात्पादहीनश्च विज्ञेयो वै बृहस्पतिः।
बृहस्पतिः पादहीनौ केतुवक्रावुभौ स्मृतौ ॥ ६५ ॥
विस्तारमण्डलाभ्यान्तु पादहीनस्तयोर्बुधः।
तारानक्षत्ररूपाणि वपुष्मन्तीह यानि वै ॥ ६६ ॥
बुधेन समरूपाणि विस्तारान्मण्डलात्तु वै।
तारानक्षत्ररूपाणि हीनानि तु परस्परम् ॥ ६७ ॥
शतानि पञ्चचत्वारि त्रीणि द्वे चैकमेव च।
सर्व्वोपरिनिकृष्टानि मण्डलानि तु तारकाः ॥ ६८ ॥
योजनार्द्धप्रमाणानि तेभ्यो ह्रस्वं न विद्यते।
उपरिष्टात्तु ये तेषां ग्रहा ये क्रूरसात्त्विकाः।
सौरश्चाङ्गिरसो वक्रो विज्ञेया मन्दचारिणः।
तेभ्योऽधस्तात्तु चत्वारः पुनश्चान्ये महाग्रहाः ॥७०॥
सोमः सूर्य्यो बुधश्चैव भार्गवश्चेति शीघ्रगाः।
यावन्ति चैव ऋक्षाणि कोटयस्तावन्ति तारकाः॥७१॥

सर्वेषान्तु ग्रहाणां वै सूर्य्योऽधस्तात्प्रसर्पति ।
विस्तीर्णं मण्डलं कृत्वा तस्योर्द्धं चरते शशी ॥७२॥
नक्षत्रमण्डलञ्चापि सोमादूर्द्धं प्रसर्पति ।
नक्षत्रेभ्यो बुधश्चोर्द्धं बुधाच्चोर्द्धन्तु भार्गवः ॥ ७३ ॥
वक्रस्तु भार्गवादूर्द्धं वक्रादूर्द्ध्वं बृहस्पतिः ।
तस्माच्छनैश्चरश्चोर्द्ध्वं देवाचार्य्यात्परं स्थितः ॥ ७४ ॥
शनैश्चरात्तथा चोर्द्ध्वं ज्ञेयं सप्तर्षिमण्डलम् ।
सप्तर्षिभ्यो ध्रुवश्चोर्द्ध्वं समस्तं त्रिदिवं ध्रुवे ॥ ७५ ॥
द्विगुणेषु सहस्रेषु योजनानां शतेषु च ।
ग्रहान्तरमथैकैकमूर्द्धं नक्षत्रमण्डलात् ॥ ७६ ॥
ताराग्रहान्तराणि स्युरुपर्य्युपर्य्यवस्थितम् ।
ग्रहाश्चन्द्रसूर्य्यौ च दिवि दिव्येन तेजसा ॥ ७७ ॥
नक्षत्रेषु च युज्यन्ते गच्छन्तो नियतक्रमात् ।
चन्द्रार्कग्रहनक्षत्रा नीचोच्चगृहमाश्रिताः ॥ ७८ ॥
समागमे च भेदे च पश्यन्ति युगपत्प्रजाः ।
परस्परं स्थिता ह्येवं युज्यन्ते च परस्परम् ॥७९॥
असङ्करेण विज्ञेय स्तेषां योगस्तु वै बुधैः ।
इत्येवं सन्निवेशो वै पृथिव्या ज्योतिषाञ्चयः ॥ ८० ॥
द्वीपानामुदधीनाञ्च पर्वतानां तथैव च ।
वर्षाणाञ्च नदीनाञ्च ये च तेषु वसन्ति वै ॥ ८१ ॥
इत्येषोऽर्कवशेनैव सन्निवेशस्तु ज्योतिषाम् ।
आवर्त्तः सान्तरो मध्ये संस्थितश्च ध्रुवस्तु सः ॥ ८२ ॥
सर्वतश्चेषु विस्तीर्णा वृत्ताकार ऊर्द्ध्वोच्छ्रितः ।
लोकसंव्यवहारार्थमीश्वरेण विनिर्मितः ॥ ८३ ॥

कल्पादौ बुद्धिपूर्वन्तु स्थापितोऽसौ स्वयम्भुवा।
इत्येष सन्निवेशो वै सर्वस्य ज्योतिरात्मकः॥ ८४॥
वैश्वरूपं प्रधानस्य परिणामोऽस्य यः स्मृतः।
तेषां शक्यं न सङ्ख्यातुं याथातथ्येन केनचित्।
गतागतं मनुष्येण ज्योतिषां मांसचक्षुषा॥ ८५॥

---

अथाष्टाविंशत्यधिकशततमोऽध्यायः।

ऋषय ऊचुः। कथं जगाम भगवन् पुरारित्वं महेश्वरः।
ददाह च कथं देव स्तन्नो विस्तरतो वद॥ १॥
पृच्छामस्त्वां वयं सर्वे बहुमानात् पुनः पुनः।
त्रिपुरन्तद्यथादुर्गं मयमायाविनिर्मितम्।
दैवतेनकेषुणा दग्धं तथा नो वद मानद!॥ २॥
सूत उवाच। शृणुध्वं त्रिपुरं देवो यथा दारितवान् भवः।
मयो नाम महामायो मायानां जनकोऽसुरः॥ ३॥
निर्जितः स तु संग्रामे तताप परमन्तपः।
तपस्यतन्तु तं विप्रा दैत्यावन्यावनुपह्वात्॥ ४॥
तस्यैव कृत्यमुद्दिश्य ते पतुः परमन्तपः।
विद्युन्माली च बलवान् तारकाख्यश्च वीर्यवान्॥५॥
मयतेजः समाक्रान्तौ तेपतुर्मय पार्श्वगौ।
लोका इव यथामूर्तास्त्रयस्त्रय इवाग्नयः॥ ६॥
लोकत्रयं तापयन्तस्ते तेपु र्दानवास्तपः।
हेमन्ते जलशय्यासु ग्रीष्मे पञ्चतपे तथा॥ ७॥
वर्षासु च तथाकाशे क्षपयन्तः स्वनूः प्रियाः।

सेवानाः फलमूलानि पुष्पाणि च जलानि च ॥ ८ ॥
अत्युग्राचरिताहाराः पङ्केनाचितवल्कलाः ।
मग्नाः शैवालपङ्केषु विमला विमलेषु च ॥ ९ ॥
निर्मांसाश्च ततो जाताः कृशाधमनिसन्तताः ।
तेषां तपःप्रभावेन प्रभावविधुतं यथा ॥ १० ॥
निष्प्रभन्तु जगत् सर्वं मन्दमेवाभिभाषितम् ।
दह्यमानेषु लोकेषु तैः स्वाभिर्दानवाग्निभिः ॥ ११ ॥
तेषामग्रे जगद्वन्धुः प्रादुर्भूतः पितामहः ।
ततः साहसकर्त्तारः प्राहुस्ते सहसागतम् ॥ १२ ॥
स्वकम्पितामहं दैत्यास्ते वै तुष्टुवुरेव च ।
अथ तान् दानवान् ब्रह्मा तपसा तपनप्रभान् ॥१३ ॥
उवाच हर्षपूर्णाक्षो हर्षपूर्णमुखस्तदा ।
वरदोऽहं हि वोऽतस्मात्तपसा तोषित आगतः ॥ १४ ॥
व्रियतामीप्सितं यच्च साभिलाषं तदुच्यताम् ।
इत्येवमुच्यमानस्तु प्रतिपन्नं पितामहम ॥ १५ ॥
विश्वकर्मा मयः प्राह प्रहर्षोत्फुल्ललोचनः ।
देवर्दैत्याः पुरा देवैः संग्रामे तारकामये ॥ १६ ॥
निर्जितास्ताडिताश्चैव हताश्चाप्यायुधैरपि ।
देवैर्वैरानुबन्धाच्च धावन्तो भयवेपिताः ॥ १७ ॥
शरणन्नैव जानीमः शर्म्म वाशरणार्थिनः ।
सोऽहं तपः प्रभावेन तव भक्त्या तथैव च ॥ १८ ॥
इच्छामि कर्त्तुं तद्दुर्गं यद्देवैरपि दुस्तरम् ।
तस्मिंश्च त्रिपुरे दुर्गे मत्कृते कृतिनां वर ! ॥ १९ ॥
भूमराणां जलजानाञ्च शापानां मुनितेजसाम् ।

देवप्रहरणानाञ्च देवानाञ्च प्रजापते ! ॥ २० ॥
अलङ्घनीयं भवतु त्रिपुरं यदि ते प्रियम् ।
विश्वकर्मा इतीवोक्तः स तदा विश्वकर्मणा ॥ २१ ॥
उवाच प्रहसन् वाक्यं मयं दैत्यगणाधिपम् ।
सर्वामरत्वं नैवास्ति असद्वृत्तस्य दानव ! ॥ २२ ॥
तस्माद् दुर्गविधानं हि तृणादपि विधीयताम् ।
पितामहवचः श्रुत्वा तदेवं दानवो मयः २३ ॥
प्राञ्जलिः पुनरप्याह ब्रह्माणं पद्मसम्भवम् ।
शम्भुरेकेषुणा दुर्गं सकृन्मुक्तेन निर्दहेत् ॥ २४ ॥
समं स संयुगे हन्यादवध्यं शेषतो भवेत् ।
एवमस्त्विति चाप्युक्त्वा मयं देवः पितामहः ॥ २५ ॥
स्वप्ने लब्धो यथार्थो वै तत्रैवादर्शनं ययौ ।
गते पितामहे दैत्या गता मयरविप्रभाः ॥ २६ ॥
वरदानाद्धि रेजुस्ते तपसा च महाबलाः ।
समयस्तु महाबुद्धिर्दानवो दानवसत्तमः ॥ २७ ॥
दुर्गं व्यवसितः कर्त्तुमिति चाचिन्तयत्तदा ।
कथं नाम भवेद्दुर्गं तन्मया त्रिपुरं कृतम् ॥ २८ ॥
वत्स्यं हि तत् पुरं दिव्यं मत्तो नान्यैर्न संशयः ।
यथा चैकेषुणा तेन तत्पुरं न हि हन्यते ॥ २९ ॥
देवै स्तथा विधातव्यं मया मतिविचारणम् ।
विस्तारो योजनशतमेकैकस्य पुरस्य तु ॥ ३० ॥
कार्यस्तेषाञ्च विष्कम्भश्चैकैकशतयोजनम् ।
पुष्ययोगेन निर्माणं पुराणाञ्च भविष्यति ॥ ३१ ॥
पुष्ययोगेन च दिवि समेष्यन्ति परस्परम् ।

पुष्ययोगेन युक्तानि यस्तान्या सादयिष्यति ॥ २२ ॥
पुराण्येकप्रहारेण शतानि निहनिष्यति ।
आयसन्तु क्षितितले राजतन्तु नभस्तले ॥ २३ ॥
राजतस्योपरिष्टात्तु सौवर्णं भविता पुरम् ।
एवं त्रिभिः पुरैर्युक्तं त्रिपुरं तद् भविष्यति ।
शतयोजनविष्कम्भैरन्तरैस्तद् दुरासदम् ॥ २४ ॥
अट्टालकैर्यन्त्रशतघ्निभिश्च सचक्रशूलोपलकम्पनैश्च ।
द्वारैर्महामन्दरमेरुकल्पैः प्राकारशृङ्गैः सुविराजमानम् ॥ २५ ॥
सतारकाख्येन मयेन गुप्तं स्वस्थश्च गुप्तं तडिन्मालिनापि ।
को नामहन्तुं त्रिपुरं समर्थो मुक्त्वा त्रिनेत्रं भगवन्तमेकम् ॥ २६ ॥

---

एकोनत्रिंशदधिकशततमोऽध्यायः ।

सूत उवाच । इति चिन्त्यमयो दैत्यो दिव्योपायप्रभावजम् ।
चकार त्रिपुरं दुर्गं मनःसञ्चारचारितम् ॥ १ ॥
प्राकारोऽनेन मार्गेण इह वामुत्र गोपुरम् ।
इह चाट्टालकद्वारमिह चाट्टालगोपुरम् ॥ २ ॥
राजमार्गं इतश्चापि विपुलो भवतामिति ।
रथ्योपरथ्याः सनिका इह चत्वर एव च ॥ ३ ॥
इदमन्तःपुरस्थानं रुद्रायतनमत्र च ।
सवटानि तडागानि ह्यत्र वाप्यः सरांसि च ॥ ४ ॥
आरामाश्च सभाश्चात्र उद्यानान्यत्र वा तथा ।
उपनिर्गमो दानवानां भवत्वत्र मनोहरः ॥ ५ ॥
इत्येवं मानसं तत्राकल्पयत् पुरकल्पवित् ।
मयेन मत्पुरं सृष्टं त्रिपुरं त्विति नः श्रुतम् ॥ ६ ॥

कार्ष्णायसमयं यत्तु मयेन विहितं पुरम्।
तारकाख्योऽधिपस्तत्र शतस्थानाधिपोऽवसत्॥ ७॥
यत्तु पूर्णेन्दुसङ्काशं राजतं निर्मितं पुरम्।
विद्युन्माली प्रभुस्तत्र विद्युन्मालीतिवाम्बुदः॥ ८॥
सुवर्णविकृतं यत्तु मयेन विहितं पुरम्।
स्वयमेव मयस्तत्र गतस्तदधिपः प्रभुः॥ ९॥
तारकस्य पुरं तत्र शतयोजनमन्तरम्।
विद्युन्मालिपुरञ्चापि शतयोजनकेऽन्तरम्॥ १०॥
मेरुपर्वतसङ्काशं मयस्यापि पुरं महत्।
पुष्यसंयोगमात्रेण कालेन समयः पुरा॥ ११॥
एकतां त्रिपुरं दैत्यस्त्रिनेत्रः पुष्यकं यथा।
येन येन मयो याति प्रकुर्वाणः पुरं पुरात्॥ १२॥
प्रयान्तास्तत्र तत्रैव वारुण्यामालयाः स्वयम्।
कल्पवृक्षायमानाश्च शतशोऽथ सहस्रशः॥ १३॥
रत्नाचितानि शोभन्ते पुराण्यमरविद्विषाम्।
प्रासादशतजुष्टानि कूटागारोत्कटानि च॥ १४॥
सर्वेषां कामगानि स्युः सर्वलोकातिगानि च।
सोद्यानवापीकूपानि सपद्मसरवन्ति च॥ १५॥
अशोकवनभूतानि कोकिलारुतवन्ति च।
चित्रशालाविशालानि चतुःशालोत्तमानि च॥१६॥
सप्ताष्टदशभौमानि सत्कृतानि मयेन च।
बहुध्वजपताकानि स्रग्दामालङ्कृतानि च॥ १७॥
किङ्किणीजालशब्दानि गन्धवन्ति महान्ति च।
सुसंयुक्तोपलिप्तानि पुष्पनैवेद्यवन्ति च॥ १८॥

यैश्च धूमान्धकाराणि संपूर्णकलशानि च।
गगनावरणाभानि हंसपङ्क्तिनिभानि च ॥१९॥
पङ्क्तीकृतानि राजन्ते गृहाणि त्रिपुरे पुरे।
मुक्ताकलापैर्लम्बद्भिर्हसन्तीव शशिश्रियम् ॥ २० ॥
मल्लिकाजातिपुष्पाद्यैर्गन्धधूपाधिवासितैः।
पञ्चेन्द्रियसुखैर्नित्यं समैः सत्पुरुषैरिव ॥ २१ ॥
हैमराजतलौहाश्च मणिरत्नाञ्जनाङ्किताः।
प्राकारास्त्रिपुरे तस्मिन् गिरिप्राकारसन्निभाः ॥ २२॥
एकैकस्मिन् पुरे तस्मिन् गोपुराणां शतं शतम्।
सपताका ध्वजवतीर्दृश्यन्ते गिरिशृङ्गवत् ॥ २३ ॥
नूपुरारावरम्याणि त्रिपुरे तत् पुराण्यपि।
स्वर्गातिरिक्तश्रीकाणि तत्र कन्यापुराणि च ॥ २४॥
आरामैश्च विहारैश्च तडागवटचत्वरैः।
सरोभिश्च सरिद्भिश्च वनैश्चोपवनैरपि ॥ २५ ॥
दिव्यभोगोपभोगानि नानारत्नयुतानि च।
पुष्पोत्करैश्च सुभगास्त्रि पुरस्योपनिर्गमाः।
परिखाशतगम्भीराः कृतामाया निवारणैः ॥ २६ ॥

निशम्य तद्दुर्ग विधानमुत्तमम्
कृतं मयेनाद्भुत वीर्यकर्मणा।
दितेःसुता दैवत राजवैरिणः
सहस्रशः प्रापुरनन्त विक्रमाः ॥ २७ ॥

तदासुरैर्दर्पितवैरिमर्दनैर्जनार्दनैः शैलकरीन्द्रसन्निभैः।
बभूव पूर्णं त्रिपुरं तथा पुरा यथाम्बरं भूरिजलैर्जलप्रदैः २८

अथ त्रिंशदधिकशततमोऽध्यायः।

सूत उवाच। निर्मिते त्रिपुरे दुर्गे मयेनासुरशिल्पिना।
तद्दुर्गं दुर्गतां प्राप बद्धवैरैः सुरासुरैः॥ १॥
सकलत्राः सपुत्राश्च शस्त्रवन्तोऽश्मकोपमाः।
मयादिष्टानि विविशुर्गृहाणि हृषिताश्च ते॥ २॥
सिंहा वनमिवानेके मकरा इव सागरम्।
रोगैश्चातिपारुष्यैः शरीरमिव संहतैः॥ ३॥
तद्वद्बलिभिरध्यस्तं तत्पुरं देवतारिभिः।
त्रिपुरं संकुलं जातं दैत्यकोटिशताकुलम्॥ ४॥
सुतलादपि निष्पत्य पातालाद्दानवालयात्।
उपतस्थुः पयोदाभा ये च गिर्युपजीविनः॥ ५॥
योयं प्रार्थयते कामं संप्राप्तस्त्रिपुरात्रयात्।
तस्य तस्य मयस्तत्र मायया विदधाति सः॥ ६॥
सचन्द्रेषु च दोषेषु साम्बुजेषु सरःसु च।
आरामेषु स चूतेषु तपोधन वनेषु च॥ ७॥
स्रक्चन्दनदिग्धाङ्गा मातङ्गाः समदा इव।
मृष्टाभरणवस्त्राश्च मृष्टस्रगनुलेपनाः॥ ८॥
प्रियाभिः प्रियकामाभिर्हावभावप्रसूतिभिः।
नारीभिः सततं रेमुर्मुदिताश्चैव दानवाः॥ ९॥
मयेन निर्मिते स्थाने मोदमाना महासुराः।
अर्थे धर्मे च कामे च निदधुस्ते मतीः स्वयम्॥ १०॥
तेषां त्रिपुरयुक्तानां त्रिपुरे त्रिदशारिणाम्।
व्रजति स्म सुखं कालः स्वर्गस्थानां यथा तथा॥११॥
शुश्रूषन्ते पितॄन् पुत्राः पत्न्यश्चापि पतींस्तथा।

विमुक्तकलहाश्चापि प्रीतयः प्रचुराभवन् ॥ १२ ॥
नाधर्मस्त्रिपुरस्थानां बाधते वीर्य्यवानपि ।
अर्चयन्तोऽन्वितैः पुत्रा स्त्रिपुरायतने हरम् ॥ १३ ॥
पुण्याहशब्दाननेकांश्चाशीर्वादांश्च वेदगान् ।
स्वनूपुररवांन् मिश्रान् वेणुवीणारवानपि ॥ १४ ॥
हासश्च वरनारीणां चित्तव्याकुलकारकः ।
त्रिपुरे दानवेन्द्राणां रमतां श्रूयते सदा ॥ १५ ॥
शिवामर्चयतां देवान् ब्राह्मणांश्च नमस्यताम् ।
धर्मार्थकामतत्त्वानां महान् कालोऽभ्यवर्तत ॥ १६ ॥
अथालक्ष्मीरसूया च तृड् बुभुक्षे तथैव च ।
कलिश्च कलहश्चैव त्रिपुरं विविशुः सह ॥ १७ ॥
सन्ध्याकालं प्रविष्टास्ते त्रिपुरञ्च भयावहाः ।
समभ्यासुः समं घोराः शरीराणि यथामयाः ॥ १८ ॥
सर्व एते विशन्तस्तु मयेन त्रिपुरान्तरम् ।
स्वप्ने भयावहा दृष्टा आविशन्तस्तु दानवान् ॥ १९ ॥
उदिते च सहस्रांशौ शुभभासाकरे रवौ ।
मयः सभामाविवेश भास्कराभ्यामिवाम्बुदः ॥ २० ॥
मेरुकूटनिभे रम्ये आसने स्वर्णमण्डिते ।
आसीनाः काञ्चनगिरेः शृङ्गे तोयमुचो यथा ॥ २१ ॥
पार्श्वयोस्तारकाख्यश्च विद्युन्माली च दानवः ।
उपविष्टौ मयस्यान्ते हस्तिनः कलभाविव ॥ २२ ॥
ततः सुरारयः सर्वे रोषकोपारणाजिरे ।
उपविष्टा दृढं विद्धा दानवा देवशत्रवः ॥ २३ ॥
तेष्वासीनेषु सर्वेषु सुखासनगतेषु च ।

मयो मायाविजनक इत्युवाच स दानवान् ॥ २४ ॥
खेचराः खेचराराधा भो भो दाक्षायणीसुताः ! ।
निशामयध्वं स्वप्नोऽयं मया दृष्टोभयावहः ॥ २५ ॥
चतस्त्रः प्रमदास्तत्र त्रयोमर्त्या भयावहाः ।
कोपानला दीप्तमुखाः प्रविष्टास्त्रिपुरादिंनः ॥ २६ ॥
प्रविश्य कुपिताश्चे च पुराण्यतुलविक्रमाः ।
प्रविष्टास्त्वच्छरीराणि भूत्वा बहुशरीरिणः ॥ २७ ॥
नगरं त्रिपुरञ्चेदं तमसा समवस्थितम् ।
सगृहं सह युष्माभिः सागराम्भसि मज्जितम् ॥ २८ ॥
उलूकं रुचिरा नारी नग्ना रूढा खरं तथा ।
पुरुषः सिन्दुतिलकश्चतुरङ्घ्रिस्त्रिलोचनः ॥ २९ ॥
येन सा प्रमदा गुप्ता अहञ्चैव विशोषितः ।
ईदृशी प्रमदा दृष्टा मया चाति भयावहा ॥ ३० ॥
एष ईदृशकः स्वप्नो दृष्टो वै दितिनन्दनाः ! ।
दृष्टः कथं हि कष्टाय असुराणां भविष्यति ॥ ३१ ॥
यदि वोऽहं चमो राजा यदिदं वेत्थ चेङ्गितम् ।
निबोधध्वं सुमनसो न चासूयितु मर्हथ ॥ ३२ ॥
कामं चेर्ष्याञ्च कोपञ्च असूयां संविहाय च ।
सत्ये दमे च धर्मे च मुनिवादे च तिष्ठत ॥ ३३ ॥
शान्तयश्च प्रयुज्यन्तां पूज्यताञ्च महेश्वरः ।
यदि नामास्य स्वप्नस्य ह्येवञ्चोपरमोभवेत् ॥ ३४ ॥
कुप्यन्त मो ध्रुवं रुद्रो देवदेवस्त्रिलोचनः ।
भविष्याणि च दृश्यन्ते यतो न त्रिपुरे सुराः ॥ ३५ ॥
कलहं वर्जयन्तश्च अर्जयन्त स्तथार्जवम् ।

स्वप्नोदयं प्रतीघध्वं कालोदयमथापि च ॥ ३६ ॥
श्रुत्वा दाक्षायणीपुत्रा इत्येवं मयभाषितम् ।
क्रोधेर्ष्यावशया युक्ता इच्छन्ते च विनाशगाः ॥ ३७ ॥
विनाशमुपपश्यन्तो ह्यलक्ष्म्याध्यापिता सुराः ।
तत्रैव दृष्ट्वा तेऽन्योऽन्यं संक्रोधापूरितेक्षणाः ॥ ३८ ॥
अथ दैवपरिध्वस्ता दानवा स्त्रिपुरालयाः ।
हित्वा सत्यञ्च धर्मञ्च अकार्य्याण्यपि चक्रमुः ॥ ३९ ॥
द्विषन्ति ब्राह्मणान् पुण्यानचार्चन्ति हि देवताः ।
गुरुं चैव न मन्यन्ते ह्यन्योन्यञ्चापि चुक्रुधुः ॥ ४० ॥
कलहेषु च सज्जन्ते स्वधर्मेषु हसन्ति च ।
परस्परञ्च निन्दन्ति अहमित्येववादिनः ॥ ४१ ॥
उच्चैर्गुरून् प्रभाषन्त नाभिभाषन्ति पूजिताः ।
अकस्मात् साश्रुनयना जायन्ते च समुत्सुकाः ॥ ४२ ॥
दधिसक्तून् पयश्चैव कपित्थानि च रात्रिषु ।
भक्षयन्ति च शेरन्त उच्छिष्टाः संहता तथा ॥ ४३ ॥
मूत्रं कृत्वोपस्पृशन्ति चाकृत्वा पादधावनम् ।
संविशन्ति च शय्यासु शौचाचारविवर्जिताः ॥ ४४ ॥
सङ्कुचन्ति भयाच्चैव मार्जाराणां यथाखुकः ।
भार्य्यां गत्वा न शुध्यन्ति रहोवृत्तिषु निस्त्रपाः ॥४५ ॥
पुरा सुशीला भूत्वा च दुःशीलत्वमुपागताः ।
देवांस्तपोधनांश्चैव बाधन्ते त्रिपुरालयाः ॥ ४६ ॥
मयेन वार्य्यमाणापि ते विनाश मुपस्थिताः ।
विप्रियाण्येव विप्राणां कुर्व्वाणाः कलहेषिणः ॥ ४७ ॥
वैभ्राजं नन्दनं चैव तथा चैत्ररथं वनम् ।

अशोकं च वराशोकं सर्वर्त्तुकमथापि च ॥ ४८ ॥
स्वर्गं च देवतावासं पूर्वदेववशानुगाः।
विध्वंसयन्ति संक्रुद्धास्तपोधनवनानि च ॥ ४९ ॥
विध्वस्तदेवायतनाश्रमं च संभग्नदेवद्विजपूजकं तु।
जगद्बभूवामरराजदुष्टै रभिद्रुतं सस्यमिवालिवृन्दैः ॥ ५० ॥

---

अथ एकत्रिंशत्यधिकशततमोऽध्यायः।

सूत उवाच। अशीलेषु प्रदुष्टेषु दानवेषु दुरात्मसु।
लोकेषूत्साद्यमानेषु तपोधन वनेषु च ॥ १ ॥
सिंहनादे व्योमगानान्तेषु भीतेषु जन्तुषु।
त्रैलोक्ये भयसंमूढे तमोन्धत्वमुपागते ॥ २ ॥
आदित्या वसवः साध्याः पितरो मरुतां गणाः।
भीताः शरणमाजग्मुर्ब्रह्माणं प्रपितामहम् ॥ ३ ॥
तं ते स्वर्णोत्पलासीनं ब्रह्माणं समुपागताः।
नमुश्चक्रुश्च सहिताः पद्मास्यं चतुराननम् ॥ ४ ॥
वरगुप्तास्त्वदैवेह दानवास्त्रिपुरालयाः।
बाधन्तेऽस्मान्यथाप्रेष्य नमुशाधि ततोऽनघ ! ॥ ५ ॥
मेघागमे यथा हंसा मृगाः सिंहभयादिव।
दानवानां भयात्तद्वद् भ्रामः प्रपितामह ॥ ६ ॥
पुत्राणां नामधेयानि कलत्राणां तथैव च।
दानवैर्भ्राम्य माणानां विस्मृतानि ततोऽनघ ! ॥ ७ ॥
देववेश्म प्रभग्नाश्च आश्रमस्थं शनानि च।
दानवैर्लोभमोहान्धैः क्रियन्ते च भ्रमन्ति च ॥ ८ ॥
यदि न त्रायसे लोकं दानवैर्विद्रुतं द्रुतम्।

धर्षणानेन निर्देवं निर्मनुष्याश्रमं जगत् ॥ ९ ॥
इत्येवं विदशेरुक्तः पद्मयोनिः पितामहः ।
प्रत्याह विदशान् वेद्गानि इन्द्रतुल्यानमः प्रभुः ॥१०॥
मयस्य योवरो दत्तो मया मति मताम्वराः ! ।
तस्यान्त एषसंग्रामो यः पुरोक्तो मया सुराः ! ॥ ११॥
तच्च तेषां मधिष्ठानं त्रिपुरं त्रिदशर्षभाः ।
एकेषु पातमोचेण हन्तव्यं नेपु दृष्टिभिः ॥ १२ ॥
भवताच्च न पश्यामि कमप्यत्र सुरर्षभाः ।
यस्तु चैक प्रहारेण पुरं हन्यात् सदानवम् ॥ १३ ॥
त्रिपुरं नाल्पवीर्येण शक्यं हन्तुं शरेण तु ।
एकं मुक्ता महादेवं महेशानं प्रजापतिम् ॥ १४ ॥
ते यूयं यदि अन्ये च क्रतुविध्वं सकं हरम् ।
या चामः सहिता देवं त्रिपुरं स हनिष्यति ॥ १५ ॥
कृतः पुराणां विष्कम्भो योजनानां शतं शतम् ।
यथा चैक प्रहारेण हन्यते वैभवेन तु ।
पुष्य योगेन युक्तानि तानि चैकक्षणेन तु ॥ १६ ॥
ततो देवैश्च संप्रोक्तोगास्याम इति दुःखितैः ।
पितामहस्य तैः सार्द्धं भवसंसदमागतः ॥ १७ ॥
तं भवं भूत भव्येशं गिरिशं शूलपाणिनम् ।
पश्यन्ति चोमया सार्द्धंनन्दिना च महात्मना ॥ १८ ॥
अग्निवर्णमजन्देवमग्नि कुण्डनिभेक्षणम् ।
अग्न्यादित्य सहस्राभ मग्निवर्णं विभूषितम् ॥ १९ ॥
चन्द्रावय वलक्ष्माणं चन्द्रसौम्य तराननम् ।
आगम्य तमजन्देव मथ तं नीललोहितम् ॥ २० ॥

स्तुवन्तो वरदं शम्भुं गोपतिं पार्वतीपतिम् ॥ २१॥
देवा ऊचुः। नमो भगवते शाय रुद्राय वरदाय च।
पशूनाम्पतये नित्य मुग्राय च कपर्दिने ॥ २२ ॥
महादेवाय भीमाय त्र्यम्बकाय च शान्तये।
ईशानाय भयघ्नाय नमस्त्वन्धकघातिने ॥ २३ ॥
नीलग्रीवाय भीमाय वेधसे वेधसास्तु ते।
कुमार शत्रु निघ्नाय कुमार जनकाय च ॥ २४ ॥
विलोहिताय धूम्राय वराय क्रथनाय च।
नित्यं नीलशिखण्डाय शूलिने दिव्यशायिने ॥ २५ ॥
उरगाय त्रिनेत्राय हिरण्यवसुरेतसे।
अचिन्त्यायाम्बिकाभर्त्रे सर्वदेवस्तुताय च ॥ २६ ॥
वृषध्वजाय मुण्डाय जटिने ब्रह्मचारिणे।
तप्यमानाय सलिले ब्रह्मण्यायाजिताय च ॥ २७ ॥
विश्वात्मने विश्वसृजे विश्वमावृत्य तिष्ठते।
नमोऽस्तु दिव्यरूपाय प्रभवे दिव्यशम्भवे ॥ २८ ॥
अभिगम्याय काम्याय स्तुत्यायार्च्याय सर्वदा।
भक्तानुकम्पिने नित्यं दिशते यन्मनोगतम् ॥ २९ ॥

---

अथ द्वात्रिंशदधिकशततमोऽध्यायः।

सूत उवाच। ब्रह्माद्यैः स्तूयमानस्तु देवदेवो महेश्वरः।
प्रजापतिमुवाचेदं देवानां च भवं महत् ॥ १
भो ! देवाः ! स्वागतं वोऽस्तु ब्रूत यद्वोमनोगतम्।
तावदेव प्रयच्छामि नास्त्वदेयं मया हि वः ॥ २ ॥

युष्माकं नितरां यं वै कर्त्ताहं विबुधर्षभाः ।
चरामि महदत्युग्रं यथापि परमं तपः ॥ ३ ॥
विद्विष्टा वो मम द्विष्टाः कष्टाः कष्टपराक्रमाः ।
तेषामभावः सम्पाद्यो युष्माकं भव एव च ॥ ४ ॥
एवमुक्तास्तु देवेन प्रेम्णा सब्रह्मकाः सुराः ।
रुद्रमाहुर्महाभागं भागार्हाः सर्व एव ते ॥ ५ ॥
भगवंस्तैस्तपस्तप्तं रौद्रं रौद्रपराक्रमैः ।
असुरैर्बध्यमानाः स्म वयं त्वां शरणं गताः ॥ ६ ॥
मयो नाम दितेः पुत्रस्त्रिनेत्रकलहप्रियः ।
त्रिपुरं येन तद्दुर्गं कृतं पाण्डुरगोपुरम् ॥ ७ ॥
तदाश्रित्य पुरं दुर्गं दानवा वरनिर्भयाः ।
बाधन्तेऽस्मान् महादेव प्रेष्यमस्वामिनं यथा ॥ ८ ॥
उद्यानानि च भग्नानि नन्दनादीनि यानि च ।
वराश्चाप्सरसः सर्वा रम्भाद्या दनुजैर्हृताः ॥ ९ ॥
इन्द्रस्य वाह्याश्च गजाः कुमुदाञ्जनवामनाः ।
ऐरावताद्यापहृता देवतानां महेश्वर ! ॥ १० ॥
ये चेन्द्ररथमुख्याश्च हरयोऽपहृतासुरैः ।
जाताश्च दानवानां ते रथयोग्यास्तुरङ्गमाः ॥ ११ ॥
ये रथा ये गजाश्चैव याः स्त्रियो वसु यच्च नः ।
तन्नोऽप्यपहृतं दैत्यैः संशयो जीविते पुनः ॥ १२ ॥
त्रिनेत्र एवमुक्तस्तु देवैः शक्रपुरोगमैः ।
उवाच देवान् देवेशो वरदो वृषवाहनः ॥ १३ ॥
व्यपगच्छतु वो देवा महद्दानवजं भयम् ।
तदहं त्रिपुरं धक्ष्ये क्रियतां यद्ब्रवीमि तत् ॥ १४ ॥

यदीच्छथ मया दग्धुं तत्पुरं सह दानवम् ।
रथमौपयिकं मह्यं सज्जयध्वं किमास्यते ॥ १५ ॥
दिग्वाससा तथोक्तास्ते सपितामहकाः सुराः ।
तथेत्युक्त्वा महादेवञ्चक्रुस्ते रथमुत्तमम् ॥ १६ ॥
धरां कूवरकौ तु द्वौ रुद्रपार्श्वचरौ शुभौ ।
अधिष्ठानं शिरो मेरो रक्षो मन्दर एव च ॥१७॥
चक्रुश्चन्द्रञ्च सूर्य्यञ्च चक्रे काञ्चनराजते ।
कृष्णपक्षं शुक्लपक्षं पक्षद्वयमपीश्वराः ॥ १८ ॥
रथनेमिद्वयं चक्रुर्देवा ब्रह्मपुरःसराः ।
आदिद्वयं पक्षयन्त्रं यन्त्रमेताश्च देवताः ॥ १९ ॥
कम्बलाश्वतराभ्याञ्च नागाभ्यां समवेष्टितम् ।
भार्गवश्चाङ्गिराश्चैव बुधोऽङ्गारक एव च ॥ २० ॥
शनैश्चरस्तथाचात्र सर्वे ते देवसत्तमाः ।
वरूथं गगनं चक्रुश्चारुरूपं रथस्य ते ॥ २१ ॥
कृतं द्विजिह्वनयनं त्रिवेणुं शातकौम्भिकम् ।
मणिमुक्तेन्द्रनीलैश्च वृतं ह्यष्टमुखैः सुरैः ॥ २२ ॥
गङ्गा सिन्धुः शतद्रूश्च चन्द्रभागा सरस्वती ।
वितस्ता च विपाशा च यमुना गण्डकी तथा ॥२३॥
सरस्वती देविका च तथा च शरयूरपि ।
एताः सरिद्वराः सर्वा वेणुसंज्ञाः कृता रथे ॥ २४॥
धृतराष्ट्राश्च ये नागास्ते च वेण्वात्मकाः कृताः ।
वासुके कुलजाये च ये च रैवतवंशजाः ॥ २५ ॥
ते सर्पा दर्पसम्पूर्णाश्चापतूणेष्वनूनगाः ।
अवतस्थुः शरा भूत्वा नानाजातिशुभाननाः ॥ २६ ॥

सुरसा सरमा कद्रूर्विनता शुचिरेव च ।
तृषा बुभुक्षा सर्वोग्रा मृत्युः सर्वशमस्तथा ॥ २७ ॥
ब्रह्मवध्या च गोवध्या बालवध्याः प्रजाभयाः ।
गदा भूत्वा यज्ञयच तदा देवरथेऽभ्ययुः ॥ २८ ॥
युगं कृतयुगञ्चास चातुर्होत्रप्रयोजकाः ।
चतुर्वर्णाः सलीलाश्च बभूवुः स्वर्णकुण्डलाः ॥ २९ ॥
तद्युगं युगसङ्काशं रथशीर्षं प्रतिष्ठितम् ।
धृतराष्ट्रेण नागेन बद्धं बलवता महत् ॥ ३० ॥
ऋग्वेदः सामवेदश्च यजुर्वेदस्तथापरः ।
वेदाश्चत्वार एवैते चत्वारस्तुरगा भवन् ॥ ३१ ॥
अन्नदानपुरोगाणि यानि दानानि कानिचित् ।
तान्यासन्वाजिनां तेषां भूषणानि सहस्रशः ॥ ३२
पद्मद्वयं तक्षकश्च कर्कोटकधनञ्जयौ ।
नागा बभूवुरेवैते हयानां बालबन्धनाः ॥ ३३ ॥
ओङ्कारप्रभवास्ता वा मन्त्रयज्ञक्रतुक्रियाः ।
उपद्रवाः प्रतीकाराः पशुबन्धेष्टय स्तथा ॥ ३४ ॥
यज्ञोपवाह्यान्येतानि तस्मिन् लोकरथे शुभे ।
मणिमुक्ताप्रवालैस्तु भूषितानि सहस्रशः ॥ ३५ ॥
प्रतोदोङ्कार एवासीत्तदग्रञ्च वषट्कृतम् ।
सिनीवाली कुहूराका तथा चानुमती शुभा ॥ ३६
योक्त्राण्यासंस्तुरङ्गाणामपसर्पणविग्रहाः ॥ ३७ ॥
कृष्णान्यथ च पीतानि श्वेतमाञ्जिष्ठकानि च ।
अवदाताः पताकाश्च बभूवुः पवनेरिताः ॥ ३८ ॥
ऋतुभिश्च कृतः षड्भिर्धनुः सम्वत्सरोऽभवत् ।

अजराज्याभवच्चापि साम्बिका धनुषो दृढ़ा ॥ ३९ ॥
कालोहि भगवान् रुद्रस्तञ्च सम्वत्सरं विदुः।
तस्मादुमाकालरात्रिर्धनुषोऽजरा जराभवत् ॥ ४० ॥
सगर्भं त्रिपुरं येन दग्धवान् स त्रिलोचनः।
स इषुर्विष्णुसोमाग्नित्रिदैवतमयोऽभवत् ॥ ४१ ॥
आननं ह्यग्निरभवच्छल्यं सोमस्तमोनुदः।
तेजसः समवायोऽस्य चेषोस्तेजो रथाङ्गधृत् ॥ ४२ ॥
तस्मिंश्च वीर्य्यवृद्ध्यर्थं वासुकिर्नागपार्थिवः।
तेजः सम्वसनार्थं वै मुमोचातिविषो विषम् ॥ ४३॥
कृत्वा देवा रथञ्चापि दिव्यं दिव्यप्रभावतः।
लोकाधिपतिमभ्येत्य रुद्रं वचनमब्रुवन् ॥ ४४ ॥
संस्कृतोऽयं रथोऽस्माभिस्तव दानवशत्रुजित्।
इदमापत्परित्राणं देवान् सेन्द्रपुरोगमान् ॥ ४५ ॥
तं मेरुशिखराकारं त्रैलोक्यरथमुत्तमम्।
प्रशस्य देवान् साध्विति रथं पश्यति शङ्करः ॥ ४६ ॥
मुहुर्दृष्ट्वा रथं साधु साध्वित्युक्त्वा मुहुर्मुहुः।
उवाच सेन्द्रानमरानमराधिपतिः स्वयम् ॥ ४७ ॥
यादृशोऽयं रथः क्लृप्तो युष्माभिर्मम सत्तमाः।
ईदृशो रथसम्पत्त्या यन्ता शीघ्रं विधीयताम् ॥ ४८ ॥
इत्युक्ता देवदेवेन देवा विद्धा इवेषुभिः।
अवापुर्महतीं चिन्तां कथं कार्यमिति ब्रुवन् ॥ ४९ ॥
महादेवस्य देवोऽन्यः कोनाम सदृशो भवेत्।
मुक्त्वा चक्रायुधं देवं सोपास्य इषुमाश्रितः ॥ ५० ॥
धुरि युक्ता इवोक्षाणो घटन्त इव पर्वतैः।

निश्वसन्तः सुराः सर्वे कथमेतदिति ब्रुवन् ॥ ५१ ॥
देवोऽ दृष्ट्वत देवांस्तु लोकनाथस्य धूर्गताम् ।
अहं सारथिरित्युक्त्वा जग्राहाश्वांस्ततोऽग्रजः ॥ ५२॥
ततो देवैः सगन्धर्वैः सिंहनादो महान् कृतः ।
प्रतोदहस्तं संप्रेक्ष्य ब्रह्माणं सूततां गतम् ॥ ५३॥
भगवानपि विश्वेशो रथस्थे वै पितामहे ।
सदृशः सूत इत्युक्त्वा चारुरोह रथं हरः ॥ ५४ ॥
आरोहति रथं देवे ह्यश्वा हरभरातुराः ।
जानुभिः पतिता भूमौ रजोग्रासश्च ग्रासितः ॥ ५५ ॥
देवो दृष्ट्वाथ वेदांस्तानभीशुग्रहयान् भयात् ।
उज्जहार पितॄनार्त्तान् सुपुत्र इव दुःखितान् ॥ ५६॥
ततः सिंहरवोभूयो बभूव रथभैरवः ।
जयशब्दश्च देवानां संबभूवार्णवोपमः ॥ ५७ ॥
तदोङ्कार मयं गृह्य प्रतोदं वरदः प्रभुः ।
स्वयम्भूः प्रययौ वाहाननुमन्त्र्य यथाजवम् ॥ ५८ ॥
ग्रसमाना इवाकाशं मुष्णन्त इव मेदिनीम् ।
मुखेभ्यः ससृजुः श्वासानुच्छ्वसन्त इवोरगाः ॥ ५९ ॥
स्वयम्भुवा चोद्यमानाश्चोदितेन कपर्दिना ।
व्रजन्ति तेऽश्वा जवनाः क्षयकाल इवानिलाः ॥ ६०॥
ध्वजोच्छ्रयविनिर्माणे ध्वजयष्टिमनुत्तमाम् ।
आक्रम्य नन्दीवृषभस्तस्थौ तस्मिंश्छिवेच्छया ॥ ६१॥
भार्गवाङ्गिरसौ देवौ दण्डहस्तौ रविप्रभौ ।
रथचक्रे तु रक्षेते रुद्रस्य प्रियकाङ्क्षिणौ ॥ ६२ ॥
शेषश्च भगवान्नागः अनन्तोऽन्तकरोऽरिणाम् ।

शरद्घनो रथम्याति गगनं मण्डलदा ॥ ६२ ॥
यमस्तूर्णं समास्थाय महिषश्चातिदारुणम् ।
द्रविणाधिपतिर्व्यालं सुराणामधिपो द्विपम् ॥ ६४ ॥
अरचत मयूरं निकूजन्तं किन्नरं यथा ।
गुह आस्थाय वरदो युगोपमरथं पितुः ॥ ६५ ॥
नन्दीश्वरश्च भगवान् शूलमादाय दीप्तिमान् ।
पृष्ठतश्चापि पार्श्वाभ्यां लोकस्य भयकृद्यथा ॥ ६६ ॥
प्रमथाश्चाग्निवर्णाभाः साग्निज्वाला इवाचलाः ।
अनुजग्मू रथं शार्वं नक्रा इव महार्णवम् ॥ ६७ ॥
भृगुभरद्वाजवसिष्ठगौतमाः क्रतुः पुलस्त्यः पुलहस्तपोधनाः ।
मरीचिरत्रिर्भगवानथाङ्गिराः पराशरागस्त्यमुखा महर्षयः ॥ ६८ ॥
हरमजितमजं प्रतुष्टुवुर्वचनविशेषैर्विचित्रभूषणैः ।
रथस्त्रिपुरे सकाञ्चनाचलो व्रजति सपक्ष इवाद्रिरम्बरे ॥ ६९ ॥
करिगिरिरविमेघसन्निभाः सजलपयोदनिनादनादिनः ।
प्रमथगणाः परिवार्य देवगुप्तं रथममरापिययुस्स दर्पयुक्ताः ॥ ७० ॥
मकरतिमितिमिङ्गिलावृतः प्रलय इवातिसमुद्धतोऽर्णवः ।
व्रजति रथवरोऽतिभास्वरो ह्यशनिनिपातपयोदनिस्वनः ॥ ७१ ॥

---

अथ त्रयस्त्रिंशदधिकशततमोऽध्यायः ।

सूत उवाच । पूज्यमाने रथे तस्मिन् लोकैर्देवे रथे स्थिते ।
प्रमथेषु नदत्सूग्रं प्रवदत्सु च साध्विति ॥ १ ॥
ईश्वरस्वरघोषेण नर्दमाने महावृषे ।
जयत्सु विप्रेषु तथा गर्जत्सु तुरगेषु च ॥ २ ॥
रथाङ्गणात् समुत्पत्य देवर्षिर्नारदः प्रभुः ।

कान्त्या चन्द्रोपमस्तूर्णं त्रिपुरं पुरमागतः ॥ ३ ॥
औत्पातिकन्तु दैत्यानां त्रिपुरे वर्त्तते ध्रुवम् ।
नारदश्चाथ भगवान् प्रादुर्भूत तपोधनः ॥ ४ ॥
आगतं जलदाभासं समेताः सर्वदानवाः ।
उत्तस्थुर्नारदं दृष्ट्वा अभिवादनवादिनः ॥ ५ ॥
तमर्घ्येण च पाद्येन मधुपर्केण चेश्वराः ।
नारदं पूजयामासुर्ब्रह्माणमिव वासवः ॥ ६ ॥
तेषां स पूजां पूजार्हः प्रतिगृह्य तपोधनः ।
नारदः सुखमासीनः काञ्चने परमासने ॥ ७ ॥
मयस्तु सुखमासीने नारदे नारदोद्भवे ।
यथार्हं दानवैः सार्द्धमासीनो दानवाधिपः ॥ ८ ॥
आसीनं नारदं प्रेक्ष्य मयस्त्वथ महासुरः ।
अब्रवीद्वचनं तुष्टो हृष्टरोमाननेक्षणः ॥ ९ ॥
औत्पातिकं पुरेऽस्माकं यथा नान्यत्र कुत्रचित् ।
वर्त्तते वर्त्तमानज्ञ ! वद त्वं किं च नारद ! ॥ १० ॥
दृश्यन्ते भयदाः स्वप्ना भज्यन्ते च ध्वजाः परम् ।
विना च वायुना केतुः पतते च तथा भुवि ॥ ११ ॥
अट्टालकाश्च नृत्यन्ते सपताकाः सगोपुराः ।
हिंस हिंसेति श्रूयन्ते गिरश्च भयदाः पुरे ॥ १२ ॥
नाहं बिभेमि देवानां सेन्द्राणामपि नारद ! ।
मुक्त्वैकं वरदं स्थाणुं भक्ताभयकरं हरम् ॥ १३ ॥
भगवन्नास्त्यविदितमुत्पातेषु तवानघ ! ।
अनागतमतीतञ्च भवान् जानाति तत्त्वतः ॥ १४ ॥
तदेतन्नोभयस्थानमुत्पाताभिनिवेदितम् ।

अवयस्व मुनिश्रेष्ठ ! प्रपन्नस्य तु नारद ! ॥ १५ ॥
इत्युक्तो नारदस्तेन मयेनामयवर्जितः।
नारद उवाच। शृणु दानव ! तत्त्वेन भवन्त्यौत्पातिका यथा ॥१६॥
धर्मेति धारणे धातुर्माहात्म्ये चैव पठ्यते।
धारणाच्च महत्त्वेन धर्म्म एव निरुच्यते ॥ १७ ॥
स इष्टप्रापको धर्म्म आचार्य्यैरुपदिश्यते।
इतरश्चानिष्टफल आचार्य्यैर्नोपदिश्यते ॥ १८ ॥
उत्पथान् मार्गमागच्छेन्मार्गाच्चैव विमार्गताम्।
विनाशकस्य निर्द्देश्य इति वेदविदो विदुः ॥ १९ ॥
सत्त्वधर्म्मे रथारूढः सर्व्वैभिरस्तदानवैः।
अपकारिषु देवानां कुरुषे त्वं सहायताम् ॥ २० ॥
तदेतान्येवमादीनि उत्पातावेदितानि च।
वैनाशिकानि दृश्यन्ते दानवानां तथैव च ॥ २१ ॥
एष रुद्रः समास्थाय महालोकमयं रथम्।
आयाति त्रिपुरं हन्तुं मय ! त्वामसुरानपि ॥२२॥
स त्वं महौजसं नित्यं प्रपद्यस्व महेश्वरम्।
यास्यसे सह पुत्रैश्च दानवैः सह मानद ! ॥ २३ ॥
इत्येवं मावेद्यभयं दानवोपस्थितं महत्।
दानवानां पुनर्द्देवो देवेशपदमागतः ॥ २४ ॥
नारदे तु मुनौ याते मयो दानवनायकः।
शूरसम्मतमित्येवं दानवानाह दानवः ॥ २५ ॥
शूराः स्थ जातपुत्राः स्थ कृतकृत्याः स्थ दानवाः।
युध्यध्वं दैवतैः सार्द्धं कर्त्तव्यं चापिनोभयम् ॥ २६ ॥
जित्वा वयं भविष्यामः सर्व्वेऽमरसभासदः।

देवांश्च येऽन्तरकान् हत्वा लोकान् भोक्ष्यामहे सुराः ॥२७॥
अट्टालकेषु च तथा तिष्ठध्वं गजपादपः।
एकाग्रिता युद्धसज्जाश्च तिष्ठध्वं गोपितायुधाः ॥ २८ ॥
पुराणि त्रीणि चैतानि यथास्थानेषु दानवाः।
तिष्ठध्वं ग्रहणीयानि भविष्यन्ति पुराणि च ॥ २९ ॥
न भोगतास्तथा शूरा देवता विदिता हि वः।
ताः प्रयत्नेन वार्याश्च विदार्याश्चैव सायकैः ॥ ३० ॥
इति दनु तनयाश्रय स्तथोक्ता
सुरगणवारणवारणे वचांसि।
युवतिजनविषक्ता मानसं तत्
त्रिपुरपुरं सहसा विवेश राजा ॥ ३१ ॥
अथ रजतविषयभाव भावो भवमभिपूज्य दिगम्बरं सुगीर्भिः।
शरण मुपजगाम देवदेवं मदनान्धकयज्ञ देहघातम् ॥३२॥
अथ मभयपदैर्विषं प्रपन्नं
बकिल बुबोध ह्रतीयदीप्तनेत्रः।
तदभिमतमदान्ततः शशाङ्की
स च किल निर्भय एव दानवोऽभूत् ॥ ३३ ॥
चतुस्त्रिंशदधिकशततमोऽध्यायः।
सूत उवाच। ततो रम्ये देववरं नारदोऽभ्यगमत् पुनः।
आगत्य चैव त्रिपुरात्सभायामास्थितः स्वयम् ॥ १ ॥
इत्ताहत मितिख्यातं तदवं विस्तृतायतम्।
अथ यत्रोवसेद्देवो लोकस्त्रियेन च संयतः ॥ २ ॥
देवानां जन्मभूमिर्या त्रिषु लोकेषु विश्रुता।
विशाखाः सततश्चैव जातकर्मादिकाः क्रियाः ॥ ३ ॥

देवानां यत्र हत्तानि कन्यादानानि यानि च ।
रेमे नित्यं भवो यत्र सहायैः पार्षदैर्गणैः ॥ ४ ॥
लोकपालाःसदा यत्र तस्थुर्मेरुगिरौ यथा ।
मधुपिङ्गलनेत्रस्तु चन्द्रावयवभूषणः ।
देवानामधिपं प्राह गणपांश्च महेश्वरः ॥ ५ ॥
वासवैतद्दरीणां ते त्रिपुरं परिदृश्यते ।
विमानैश्च पताकाभिर्ध्वजैश्च समलङ्कृतम् ॥ ६ ॥
इदं हर्म्यमिदं ख्यातं वह्निवदभ्रतापनम् ।
एते जना गिरिप्रख्याः सकुण्डलकिरीटिनः ॥ ७ ॥
प्राकारगोपुराट्टेषु कक्षान्ते दानवा स्थिताः ।
इमे च तोयदाभासा दनुजा विकृताननाः ॥ ८ ॥
निर्गच्छन्ति पुरीदैत्याः सा युधाविजयैषिणः ।
स त्वं शरशतैः सार्द्धं ससहायो वरायुधः ।
सहस्रैर्भीमकर्मैर्भृत्यैर्व्यापादय महासुरान् ॥ १० ॥
अहं च रथवर्येण निश्चलाचलवत्स्थितः ।
पुरः पुरस्य रन्ध्रार्थी स्थास्यामि विजयाय वः ॥११॥
यदा तु पुष्ययोगेन एकत्वं स्थास्यते परम् ।
तदैतन्निर्दहिष्यामि शरेणैकेन वासव! ॥ १२ ॥
इत्युक्तो वै भगवता रुद्रेणेह सुरेश्वरः ।
ययौ तत्त्रिपुरं जेतुं तेन सैन्येन संवृतः ॥ ११ ॥
प्रक्रान्तरथभीमैस्तैः स देवैः पार्षदाग्रणैः ।
कृतसिंहरवोपेतैर्गर्जद्भिरिवाम्बुदैः ॥ १४ ॥
तेन नादेन त्रिपुराद्दानवा युद्धलालसाः ।
उत्पत्य दुद्रुवुश्चेलुः सायुधाः खे गणेश्वरान् ॥१५॥

अन्ये पयोधराराषाः पयोधरसमा बभुः ।
ससिंहनादं वादित्रं वादयामासुरुद्धताः ॥ १६ ॥
देवानां सिंहनादश्च सर्वं तूर्यरवो महान् ।
अस्तोभृद्दैत्य नादेश चन्द्रस्तोयधरैरिव ॥ १७ ॥
चन्द्रोदयात् समुद्भूतः पौर्णमास इवार्णवः
त्रिपुरं प्रभवत्तद्धीमरूप महासुरैः ॥ १८ ॥
प्राकारेषु पुरे तत्र गोपुरेष्वपिचापरे ।
अट्टालकान् समारुह्य केचिच्चलितवादिनः ॥ १९ ॥
स्वर्णमालाधराः शूराः प्रभासितकराम्बराः ।
केचिन्नदन्ति दनुजाः कोयमुक्ता इवाम्बुदाः ॥ २० ॥
इतश्चेतश्च धावन्तः केचिदुद्धूतवाससः ।
किमेतदिति पप्रच्छुरन्योन्यं गृहमाश्रिताः ॥ २१ ॥
किमेतन्नैव जानामि ज्ञानमन्तर्हितं हि मे ।
ज्ञास्य सेनन्तरेणेति कालोऽभिस्तारतो महान् ॥ २२ ॥
सोऽप्यसौ पृथ्वी भारं सिंहश्च रथमाश्रितः ।
निहतं त्रिपुरं पीड्य देहं व्याधिरिवोच्छ्रितः ॥ २३ ॥
य एषोऽस्ति स एषोऽस्तु कातिन्ता संभ्रमे सति ।
एहिमायुध मादाय कर्मे पृच्छा भविष्यति ॥ २४ ॥
इति तेऽन्योन्यमाविश्य उत्तरोत्तरभाषिणः ।
आसाद्य पृच्छन्ति तदा दानवा त्रिपुरालयाः ॥ २५ ॥
तारकाख्य पुरे दैत्यास्तारकाक्षपुरःसराः ।
निर्गताः कुपितास्तूर्णं बिलादिव महोरगाः ॥ २६ ॥
निर्धावन्तस्तु ते दैत्याः [illegible] गुह्यकैः ।
निरुद्धा [illegible] यथा केसरियूथपैः ॥ २७ ॥

दर्पितानां ततस्तेषां दर्पितानामिवाग्निनाम् ।
रूपाणि जज्वलुस्तेषामग्नीनामिव धम्यताम् ॥ २८ ॥
ततो वृहन्ति चापानि भीमनादानि सर्वशः ।
निकृष्य जघ्नुरन्योन्यमिषुभिः प्राणभोजनैः ॥ २९ ॥
मार्जारमृगभीमास्यान् पार्षदान्विकृताननान् ।
दृष्ट्वा दृष्ट्वा हसन्तुर्दानवा रूपसम्पदा ॥ ३० ॥
बाहुभिः परिघाकारैः कृष्यतां धनुषां शराः ।
भटवर्मसु विविशुस्तडागानीव पक्षिणः ॥ ३१ ॥
मृताः स्थ क्व नु यास्येथ हनिष्यामो निवर्त्तताम् ।
इत्येवं परुषाण्युक्त्वा दानवाः पार्षदर्षभान् ॥ ३२ ॥
विभिदुः सायकैस्तीक्ष्णैः सूर्य्यपादा इवाम्बुदान् ।
प्रमथा अपि संहृष्टाः सिंहविक्रान्तविक्रमाः ।
खड्गशैलशिलावृक्षैर्विभिदुर्दैत्यदानवान् ॥ ३३ ॥
अम्बुदैराकुलमिव हंसाकुलमिवाम्बरम् ।
दानवाकुलमत्यर्थं तत्पुरं सकलं बभौ ॥ ३४ ॥
विकृष्टचापा दैत्येन्द्राः सृजन्ति शरदुर्दिनम् ।
इन्द्रचापाङ्कितोरस्का जलदा इव दुर्दिनम् ॥ ३५ ॥
इषुभिस्ताड्यमानास्ते भूयो भूयो गणेश्वराः ।
चक्रुस्ते देहनिर्यासं स्वर्णधातुमिवाचलाः ॥ ३६ ॥
तथा वृक्षशिला वज्रशूलपट्टिशपरश्वधैः ।
चूर्ण्यन्तेऽभिहता दैत्याः काचाष्टङ्कहता इव ॥ ३७ ॥
चन्द्रोदयात् समुद्भूतः पौर्णमास इवार्णवः ।
त्रिपुरं प्रभवत्तद्भीमरूपमहासुरैः ॥ ३८ ॥
तारकाक्षो जयत्येष इति दैत्या अघोषयन् ।

जयतीन्द्रश्च रुद्रश्च इत्येव च गणेश्वराः ॥ ३९ ॥
वारिता दारिता बाणैर्योधास्तस्मिन् बलोभये ।
निःस्वनन्तोऽम्बुसमये जलगर्भा इवाम्बुदाः ॥ ४० ॥
करैश्छिन्नैः शिरोभिश्च ध्वजैश्छत्रैश्च पाण्डुरैः ।
युद्धभूमिर्भयवती मांसशोणितपूरिता ॥ ४१ ॥
व्योम्नि चोत्पत्य सहसा तालमात्रं वरायुधैः ।
दृढाहताः पतन्पूर्वं दानवाः प्रमथा स्तथा ॥ ४२ ॥
सिद्धाश्चाप्सरसश्चैव चारणाश्च नभोगताः ।
दृढप्रहारहर्षिताः साधु साध्विति चुक्रुशुः ॥ ४३ ॥
घनाहताश्च वियति देवदुन्दुभय स्तथा ।
नदन्तो मेघशब्देन सरभा इव रोषिताः ॥ ४४ ॥
ते तस्मिंस्त्रिपुरे दैत्यानद्यः सिन्धुपताविव ।
विशन्ति क्रुद्धवदना वल्मीकमिव पन्नगाः ॥ ४५ ॥
तारकाख्यपुरे तस्मिन् सुराः शूराः समन्ततः ।
सशृङ्गा निपतन्तिस्म सपक्षा इव भूधराः ॥ ४६ ॥
योधयन्ति त्रिभागेन त्रिपुरे तु गणेश्वराः ।
विद्युन्माली मयश्चैव भग्नौ च द्रुमवद्रणे ॥ ४७ ॥
विद्युन्माली स दैत्येन्द्रो गिरीन्द्रसदृशद्युतिः ।
आदाय परिघं घोरं ताडयामास नन्दिनम् ॥ ४८ ॥
स नन्दी दानवेन्द्रेण परिघेण दृढाहतः ।
भ्रमते मधुना व्यक्तः पुरा नारायणो यथा ॥ ४९ ॥
नन्दीश्वरे गते तत्र गणपाख्यातविक्रमाः ।
दुद्रुवुर्जातसंरम्भा विद्युन्मालिन मासुरम् ।
घण्टाकर्णः शङ्कुकर्णौ महाकालश्च पार्षदाः ॥ ५१ ॥

ततश्च सायकैः सर्व्वान् गणपांश्च गणपाकृतीन्।
भूयो भूयः स विव्याध गणेश्वरमहत्तमान्॥ ५२ ॥
भित्वा भित्वा शरावीघैर्नभस्यम्बुधरो यथा।
तथाऽरचितशब्देन नन्दी दिनकरप्रभः।
संज्ञां लब्ध्वा ततः सोऽपि विद्युन्मालिनमाद्रवत्॥५३॥
रुद्रदत्तं तदा दीप्तं दीप्तानलसमप्रभम्।
वज्रं वज्रनिभाङ्गस्य दानवस्य ससर्ज ह॥ ५४ ॥
तन्नन्दिभुजनिर्मुक्तं मुक्ताफलविभूषितम्।
पपात वक्षसि तदा वज्रं दैत्यस्य भीषणम्॥ ५५ ॥
स वज्रं विहतो दैत्यो वज्रसंहननोपमः।
पपात वज्राभिहतः शक्रेणाद्रिरिवाहतः॥ ५६ ॥
दैत्येश्वरं विनिहतं नन्दिना कुलनन्दिना।
चुक्रुशुर्दानवाः प्रेक्ष्य दुद्रुवुश्च गणाधिपाः॥ ५७ ॥
दुःखामर्षितरोषास्ते विद्युन्मालिनिपातिते।
द्रुमशैलमहावृष्टिं पयोदाः सस्रुजुर्यथा॥ ५८ ॥
ते पीड्यमाना गुरुभिर्गिरिभिश्च गणेश्वराः।
कर्त्तव्यं न विदुः किञ्चिद्धर्म्मनाधार्मिका इव॥५९॥
ततोऽसुरवरः श्रीमांस्तारकाख्यः प्रतापवान्।
स तरूणां गिरीणां वै तुल्यरूपधरोबभौ॥ ६० ॥
भिन्नोत्तमाङ्गा गणपा भिन्नपादाङ्कितानना।
विरेजुर्भुजगा मन्त्रैर्वार्यमाणा यथा तथा॥ ६१ ॥
मयेन मायावीर्येण वध्यमाना गणेश्वराः।
भ्रमन्ति बहुशब्दाढ्याः पञ्जरे शकुना इव॥ ६२ ॥
तथा सुरवरः श्रीमांस्तारकाख्यः प्रतापवान्।

ददाह च बलं सर्वं शुष्केन्धनमिवानलः ॥ ६३ ॥
तारकाक्षेण वार्यन्ते शरवर्षैस्तदा गणाः ।
मयेन मायानिहतास्तारकाख्येण चेषुभिः ॥ ६४ ॥
गणेशा विधुरा जाता जीर्णमूला यथा द्रुमाः ॥ ६५ ॥
भूयः सम्पतते चाग्निर्ग्राहान् ग्राहान् भुजङ्गमान् ।
गिरीन्द्रांश्च हरीन् व्याघ्रान् वृक्षान् सृमरतर्णकान् ॥६६॥
शरभानष्टपादांश्च आपः पवन मेव च ।
मयो मायाबलेनैव पातयत्येव शत्रुषु ॥ ६७ ॥
ते तारकाक्षेण मयेन मायया
संमुह्यमाना विवशा गणेश्वराः ।
न शक्नुवन्ते मनसापि चेष्टितुम्
यथेन्द्रियार्था मुनिनाभिसंयताः ॥ ६८ ॥
महाजलाग्न्यादि सकुञ्जरोरगै-
र्हरीन्द्रव्याघ्रर्क्षतरक्षुराक्षसैः ।
विबाध्यमानास्तमसा विमोहिताः
समुद्रमध्येष्विव गाधकाङ्क्षिणः ॥ ६९ ॥
संमर्द्यमानेषु गणेश्वरेषु सम्वर्द्दमानेषु सुरेतरेषु ।
ततः सुराणां प्रवराभिरक्षितुं रिपोर्बलं सम्विविशुः सहायुधाः ॥७०॥
यमोगदाग्रो वरुणश्च भास्कर स्तथा कुमारोऽमरकोटिसंयुतः ।
स्वयं च शक्रः सितनागवाहनः कुलीशपाणिः सुरलोकपुङ्गवः ॥ ७१
स चोडुनाथः समुतो दिवाकरः ससान्तकव्यग्रघपातिर्महाद्युतिः ।
एते रिपूणां प्रबलाभिरक्षितं तदा बलं सम्विविशुर्मदोद्धताः ॥ ७२॥
था वनं दर्पितकुञ्जराधिपा यथानभः साम्बुधरं दिवाकरः ।
यथा च सिंहैर्विजनेषु गोकुलं तथा बलं तच्चिदशैरभिद्रुतम् ७३॥

कृतप्रहारातुरदीनदानवं
ततस्त्वभज्यन्त बलं हि पार्षदाः ।
स्वर्ज्योतिषां ज्योतिरिवोद्भवान् हरि-
र्यथा तमो घोरतरं नराणाम् ॥ ७४ ॥
विनाशयामास यथा सदैव
निशाकरः सञ्चितशार्वरं तमः ।
ततोऽपकृष्टे च तमःप्रभावे
सत्त्वप्रभावे च विवर्द्धमाने ॥ ७५ ॥
दिग्लोकपालैर्गणनायकैश्च
कृतो महान् सिंहरवो मुहूर्त्तम् ।
संख्ये निमग्ना विकरा विपादा-
श्छिन्नोत्तमाङ्गाः शरपूरिताङ्गाः ॥ ७६ ॥
दैत्येश्वरा देववरैर्विभिन्नाः
सीदन्ति पङ्केषु यथा गजेन्द्राः ।
वज्रेण भीमेन च वज्रपाणिः
शक्त्या च शक्त्या च मयूरकेतुः ॥ ७७ ॥
दण्डेन चोग्रेण च धर्मराजः
पाशेन चोग्रेण च वारिगोप्ता ।
शूलेन कालेन च यक्षराजो
वीर्येण तेजस्वितया सुकेशः ॥ ७८ ॥
गणेश्वरास्ते सुरसन्निकाशाः
पूर्णाहुतीसिक्तशिखिप्रकाशाः ।
उत्सादयन्ते दनुपुत्रवृन्दा-
न्यथैव इन्द्राशनयः पतन्त्यः ॥ ७९ ॥

मयस्तु देवान् परिरक्षितारमु-
मात्मजं देववरं कुमारम् ।
शरेण भित्त्वा सहि तारकासुतं
स तारकाख्यासुरमाबभाषे ॥ ८० ॥
कृत्वा प्रहारं प्रविशामि वीरं पुरं हि दैत्येन्द्र बलेन युक्तः ।
विश्राममूर्जस्करमप्यवाप्य पुनः करिष्यामि रणं प्रपन्नैः ॥८१॥
वयं हि शस्त्रक्षतवेक्षिताङ्गा विशीर्णशस्त्रध्वजवर्मवाहाः ।
जयैषिण स्ते जयकाशिनश्च गणेश्वरा लोकवराधिपाश्च ॥८२॥
मयस्य श्रुत्वा दिवि तारकाख्योवचोऽभिकाङ्क्षन् क्षतजोपमाक्षः ।
विवेश तूर्णं त्रिपुरन्दितिजैः सुतैः सुतैरदित्या युधि दृष्टहर्षैः ॥८३॥
ततः सशङ्खानकभेरिभीमं ससिंहनादं हरसैन्यमाबभौ ।
मयानुगर्भ्भोरगभीरगह्वरं यथा हिमाद्रे र्गजसिंहनादितम्॥८४॥

---

अथ पञ्चत्रिंशदधिकशततमोऽध्यायः ।

सूत उवाच । मयः प्रहारं कृत्वा तु मायावी दानवर्षभः ।
विवेश तूर्णं त्रिपुरमभ्रं नीलमिवाम्बरम् ॥ १ ॥
सदीर्घमुष्ण निश्वस्य दानवान् वीक्ष्य मध्यगान् ।
दध्यौ लोकक्षये प्राप्ते कालं काल इवापरः ॥ २ ॥
इन्द्रोऽपि विभ्यते यस्य स्थिता युद्धेष्वरपतेः ।
स चापि निधनं प्राप्तो विद्युन्माली महायशाः ॥३॥
दुर्गं वै त्रिपुरस्यास्य न समं विद्यते पुरम् ।
तस्याप्येषो नयः प्राप्तो न दुर्गं कारणं क्वचित् ॥ ४॥
कालस्यैव वशे सर्वं दुर्गं दुर्गतरञ्च यत् ।
काले क्रुद्धे कथं कालात्त्राणं नोऽद्य भविष्यति ॥५॥

लोकेषु त्रिषु यत् किञ्चिद्बलं वै सर्वजन्तुषु।
कालस्य तद्धि सर्वमिति पैतामहोविधिः॥ ६॥
यस्मिन् कः प्रभवोयोगोऽयसन्धार्ये मितात्मनि।
लङ्घने कः समर्थः स्यादृते देवं महेश्वरम्॥ ७॥
बिभेमि नेन्द्रादि यमादरुणाच्च वित्तपात्।
स्वामी चैषान्तु देवानां दुर्जयः स महेश्वरः॥ ८॥
ऐश्वर्य्यस्य फलं यत्तत् प्रभुत्वस्य च यत् फलम्।
तदद्य दर्शयिष्यामि यावद्वीराः समन्ततः॥ ९॥
वापीममृततोयेन पूर्णां स्रक्ष्ये वरौषधीः।
जीविष्यन्ति तदा दैत्याः सञ्जीवनवरौषधीः॥ १०॥
इति सञ्चिन्त्य बलवान् मयो मायाविनां वरः।
मायया ससृजे वापीं रम्भामिव पितामहः॥ ११॥
द्वियोजनायतां दीर्घां पूर्णयोजनविस्तृताम्।
आरोहसंक्रमवतीं चन्द्ररूपां तथैव च॥ १२॥
इन्दोः किरणकल्पेन मृष्टेनामृतगन्धिना।
पूर्णां परमतोयेन गुणपूर्णामिवाङ्गनाम्॥ १३॥
उत्पलैः कुमुदैः पद्मैर्वृतां कादम्बकैस्तथा।
चन्द्रभास्करवर्णाभैर्भीमैरावरणैर्वृताम्॥ १४॥
खगैर्मधुररावैश्च चारुचामीकरप्रभैः।
कामैर्विभिरिवाकीर्णां जीवानामरणीमिव॥ १५॥
तां वापीं सृज्य स मयो गङ्गामिव महेश्वरः।
तस्यामप्लापयामास विद्युन्मालिनमादितः॥१६॥
स वाप्यां मज्जितो दैत्यो देवशत्रुर्महाबलः।
उत्तस्थाविन्धनैरिद्धः सर्पोहुत इवानलः॥ १७॥

मयस्य चाञ्जलिं कृत्वा तारकाख्योऽभिवादितः ।
विद्युन्मालीति वचनं मयमुत्थाय चाब्रवीत् ॥ १८ ॥
क्व नन्दी सह रुद्रेण हतः प्रमथजम्बुकैः ।
युद्धग्रामो नन्दिनं पीड्य दयादेहेषु का ह्रि नः ॥१९॥
पन्नास्यैव च रुद्रस्य भवामः प्रभविष्णवः ।
तैर्वा विनिहता युद्धे भविष्यामो यमाग्रताः ॥ २० ॥
विद्युन्मालेर्निशम्यैतन्मयो वचनमूर्जितम् ।
तं परिष्वज्य सास्रोक्ष इदमाह महासुरः ॥ २१ ॥
विद्युन्मालिन्न मे राज्यमभिप्रेतन्न जीवितम् ।
त्वया विना महाबाहो ! किमन्येन महासुर ! ॥२२॥
महामृतमयी वापी ह्येषा मायाभिरीश्वर ! ।
सृष्टा दानवदैत्यानां हतानां जीववर्द्धिनी ॥ २३ ॥
दिष्ट्या त्वां दैत्य ! पश्यामि यमलोकादिहागतम् ।
दुर्नीता वनयग्रस्तं भोक्ष्यामोऽद्य महानिधिम् ॥२४॥
दृष्ट्वा दृष्ट्वा च तां वापीं मायया मयनिर्मिताम् ।
हृष्टाननास्ते दैत्येन्द्रा इदं वचनमब्रुवन् ॥ २५ ॥
दानवा ! युद्ध्यतेदानीं प्रमथैः सह निर्भयाः ।
मयेन निर्मितावापी हतान् सञ्जीवयिष्यति ॥ २६ ॥
ततः क्षुब्धाम्बुधिनिभाभेरी सानुभयङ्करी ।
वाद्यमाना ननादोच्चैरौरवी सा पुनः पुनः ॥ २७ ॥
श्रुत्वा भेरीरवं घोरं मेघारम्भितसन्निभम् ।
न्यपतन्नसुराः पूर्णां त्रिपुराद्युद्धलालसाः ॥ २८ ॥
लोहराजतसौवर्णैः कटकैर्मणिराजितैः ।
आमुक्तैः कुण्डलैर्हारैर्मुकुटैरपिचोत्कटैः ॥ २९ ॥

धूमायिता ह्यविरमा ज्वलन्त इव पावकाः।
आयुधानि समादाय काशिनो दृढविक्रमाः॥ ३० ॥
नृत्यमाना इव नटा गर्जन्त इव तोयदाः।
करोच्छ्रया इव गजाः सिंहा इव च निर्भयाः॥३१॥
ह्रदा इव च गम्भीराः सूर्या इव प्रतापिताः।
द्रुमा इव च दैत्येन्द्रा स्तामयन्तो बलं महत्॥ ३२ ॥
प्रमथा अपि सोत्साहा गरुडोत्पातपातिनः।
युयुत्सवोऽभिधावन्ति दानवान् दानवारयः॥ ३३ ॥
नन्दीश्वरेण प्रमथा स्तारकाख्येण दानवाः।
चक्रुः संहत्य संग्रामञ्चोद्यमाना बलेन च॥ ३४ ॥
तेऽसिभिश्चन्द्रसङ्काशैः शूलैश्चानलपिङ्गलैः।
वाणैश्च दृढनिर्मुक्तैरभिजघ्नुः परस्परम्॥ ३५ ॥
शराणां सृज्यमानानामसीनाञ्च निपात्यताम्।
रूपाण्यासन्महोल्कानां पतन्तीनामिवाम्बरात्॥ ३६॥
शक्तिभिर्भिन्नहृदया निर्दया इवपातिताः।
निरयेष्विव निमग्नाः कूजन्ते प्रमथासुराः॥ ३७ ॥
हेमकुण्डलयुक्तानि किरीटोत्कटवन्ति च।
शिरांस्युर्व्यां पतन्तिस्म गिरिकूटानिवात्यये॥ ३८ ॥
परश्वधैः पट्टिशैश्च खड्गैश्च परिघै स्तथा।
छिन्नाः करिवराकारा निपेतुस्ते धरातले॥ ३९ ॥
गर्जन्ति सहसा हृष्टाः प्रमथा भीमगर्जनाः।
साधयन्त्यपरे सिद्धा युद्धगान्धर्वमद्भुतम्॥ ४० ॥
बलवान्भासि प्रमथदर्पितो भासि दानव !।
इति चोच्चारयन्वाचं वारणा रणधूर्गताः॥ ४१ ॥

परिघैराहताः केचिद्दानवैः शङ्करानुगाः ।
वमन्ते रुधिरं वक्त्रैः स्वर्णधातुमिवाचलाः ॥ ४२ ॥
प्रमथैरपि नाराचैरसुराः सुरसम्भव: ।
द्रुमैश्च गिरिशृङ्गैश्च गाढमेवाहवे हताः ॥ ४३ ॥
सूदितानथ तान् दैत्यानन्ये दानवपुङ्गवाः ।
उत्क्षिप्य चिक्षिपुर्वाप्यां मयदानवनोदिता: ॥४४॥
ते चापि भास्वरैर्देहैः स्वर्गलोक इवामराः ।
उत्तस्थुर्वापीमासाद्य सद्रूपाभरणाम्बराः ॥ ४५ ॥
अथैके दानवाः प्राप्य वापीप्रक्षेपणादसून् ।
आस्फोटय्र सिंहनादञ्च कृत्वाधावंस्तथा सुराः ॥४६॥
दानवाः प्रमथानेतान् प्रसर्पत किमासथ ।
हतानपि हि वो वापी पुनरुज्जीवयिष्यति ॥ ४७ ॥
एवं श्रुत्वा शङ्कुकर्णोवचोऽयग्रहसन्निभः ।
द्रुतमेवेत्य देवेशमिदं वचनमब्रवीत् ॥ ४८ ॥
सूदिताः सूदिता देव ! प्रमथैरसुरा ह्यमी ।
उत्तिष्ठन्ति पुनर्भीमाः सस्याइव जलोक्षिताः ॥ ४९ ॥
अस्मिन् किल पुरे वापी पूर्णा मृतरसाम्भसा ।
निहतानिहता यत्र क्षिप्ता जीवन्ति दानवाः ॥ ५० ॥
इति विज्ञापयद्देवं शङ्कुकर्णो महेश्वरम् ।
अभवन् दानवबलउत्पाता वै सुदारुणाः ॥ ५१ ॥
तारकाख्यः सुभीमाक्षो दारितास्यो हरिर्यथा ।
अभ्यधावत् सुसंक्रुद्धो महादेवरथं प्रति ॥ ५२ ॥
त्रिपुरे तु महान् घोरो भेरी शङ्खरवो बभौ ।
दानवा निःसृता दृष्ट्वा देवदेवरथे सुरम् ॥ ५३ ॥

भूकम्पश्चाभवत्तत्र शताङ्गो भुगतोऽभवत् ।
दृष्ट्वा क्षोभमगाद्रुद्रः स्वयम्भूश्च पितामहः ॥ ५४ ॥
ताभ्यां देववरिष्ठाभ्यामन्वितः स रथोत्तमः ।
अनायतनमासाद्य सीदति गुणवानिव ॥ ५५ ॥
धातुक्षये देह इव ग्रीष्मे चाल्पमिवोदकम् ।
शैथिल्यं याति स रथः स्नेहो विप्रकृतो यथा ॥ ५६ ॥
रथादुत्पत्याथ भुवं सीदन्तं तु रथोत्तमम् ।
उज्जहार महाप्राणो रथं त्रैलोक्यरूपिणम् ॥ ५७ ॥
तदा शराद्विनिष्पत्य पीतवासा जनार्दनः ।
वृषरूपं महत् कृत्वा रथं जग्राह दुर्धरम् ॥ ५८ ॥
सविषाणाभ्यां त्रैलोक्यं रथमेव महारथः ।
प्रगृह्योद्वहते सज्जं कुलं कुलवहो यथा ॥ ५९ ॥
तारकाख्योऽपि दैत्येन्द्रो गिरीन्द्र इव पक्षवान् ।
अभ्यद्रवत्तदा देवं ब्रह्माणं हतवांश्च सः ॥ ६० ॥
स तारकाख्याभिहतः प्रतोदं न्यस्य कूबरे ।
विजज्वाल मुहुर्ब्रह्मा श्वासं वक्त्रात् समुद्गिरन् ॥ ६१ ॥
तत्र दैत्यैर्महानादो दानवैरपि भैरवः ।
तारकाख्यस्य पूजार्थं कृतो जलधरोपमः ॥ ६२ ॥
रथचरणकरोऽथ महामृधे वृषभवपुर्वृषभेन्द्रपूजितः ।
दितितनयबलं विमर्द्य सर्वं त्रिपुरपुरं प्रविवेश केशवः ॥ ६३ ॥
सजलजलदराजितां समन्ताम्
कुमुदवरोत्पलफुल्लपङ्कजाढ्याम् ।
सुरगुरुरपिवत्पयो स्मृतन्त
दृढवरिवसञ्चित गात्रैस्तमोऽन्धम् ॥ ६४ ॥

वापीं पीत्वा सुरेन्द्राणां पीतवासा जनार्दनः ।
मर्दमानो महाबाहुः प्रविवेश गदस्ततः ॥ ६५ ॥
ततोसुराभीमगणेश्वरैर्हताः प्रहारसम्भग्नित शोणितापगाः ।
पराङ्मुखाभीमसुखैः कृतारणे यथा नगाभ्युद्यततत्परैर्नरैः ६६
स तारकाख्यस्तडिमालिरेव च मयेन सार्द्धं प्रमथैर्भमदुता ।
पुरं परावृत्यनुतेशरार्दिता यथा शरीरं पवनादयो गता ॥ ६७॥
गणेश्वराभ्युद्यतदर्पकारिणो महेन्द्रनन्दीश्वरषण्मुखायुधि ।
विनेदुरुच्चैर्जहसुश्च दुर्मदाजयेन्द्रचन्द्रादि दिगीश्वरैः सह ॥ ६८

---

अथ षट्त्रिंशदधिशततमोऽध्यायः ।

सूत उवाच । प्रमथैः समरे भग्नास्ते पुरान्तेसुरारयः ।
पुरं प्रविविशुर्भीताः प्रमथैर्भग्नगोपुरम् ॥ १ ॥
शीर्णदंष्ट्रा यथा नागा भग्नशृङ्गा यथा वृषाः ।
यथा विपक्षाः शकुनानद्यः क्षीणोदका यथा ॥ २ ॥
मृतप्रायास्तथा दैत्या दैवतविकृताननाः ।
बभूवुस्ते विमनसः कथं कार्यमिति ब्रुवन् ॥ ३ ॥
अथ तान् म्लान मनसस्त्वदातामरमाननः ।
उवाच दैत्यादैत्यानां परमाधिपतिर्मयः ॥ ४ ॥
कृत्वा युद्धानि घोराणि प्रमथैः सहसामरैः ।
तोषयित्वा तथा युद्धे प्रमथानमरैः सह ॥ ५ ॥
युद्धं यत् प्रथमं दैत्याः पश्चाच्च बलपीडिताः ।
प्रविष्टा नगरन्त्रासात् प्रमथैर्भृशमर्दिताः ॥ ६ ॥
अप्रियं क्रियते व्यक्तं दैवेनोत्र न संशयः ।
यत्र नाम महाभागाः प्रविशन्ति गिरिव्रजम् ॥ ७ ॥

अहो हि कालस्य बलमहो कालो हि दुर्जयः।
यत्नेदृशस्य दुर्गस्य उपरोधोऽयमागतः॥ ८॥
मये विवदमाने तु नर्दमाने इवाम्बुदे।
बभूवुर्निष्प्रभा दैत्या पद्मा इन्दूदये यथा॥ ९॥
वापीपालास्ततोऽभ्येत्यनभःकाल इवाम्बुदाः।
मयमाहुर्यमप्रख्यं साञ्जलिप्रपद्गाः स्थिताः॥ १०॥
या सामृतरसा गूढा वापी वै निर्मिता त्वया।
समाकुलोत्पलवना समीनाकुलपङ्कजा॥ ११॥
पीता सा वृषरूपेण केनचिद्दैत्यनायक!।
वापी सा साम्प्रतं दृष्टामृतसंज्ञा इवाङ्गना॥ १२॥
वापीपालवचः श्रुत्वा मयोऽसौ दानवप्रभुः।
कष्टमित्यसकृत् प्रोच्य दितिजानिदमब्रवीत्॥ १३॥
मया मायाबलकृता वापी पीता त्वियं यदि।
विनष्टाः स्म न सन्देह त्रिपुरं दानवागतम्॥ १४॥
निहतान्निहतान् दैत्यानाजीवयति दैवतैः।
पीता वा यदि वा वापी पीता वै पीतवाससा॥ १५॥
कोऽन्योऽमममायया गुप्तां वापीममृततोयिनीम्।
पास्यति विष्णुमजितं वर्जयित्वा गदाधरम्॥ १६॥
सुगुह्यमपि दैत्यानां नास्त्यस्याविदितम्भुवि।
यत्र महरकौशल्यं विज्ञातं न हृतं बुधैः॥ १७॥
समोऽयं रुचिरोद्देशो निद्रुमो निद्रुमाचलः।
लभेमन्दूरतः कृत्वा बाधन्ते ऽस्मान् गणामराः॥ १८॥
ते यूयं यदि मन्यध्वं सागरोपरिधिष्ठिताः।
प्रमथानां महावेगं सहामः श्वसनोपमम्॥ १९॥

एतेषाञ्च समारम्भा स्तस्मिन् सागरसंप्लवे ।
निवत्स्यामो भविष्यन्ति एतद्रूपपथावृताः ॥ २० ॥
युध्यतां निघ्नतां शत्रून् भीतानाञ्च द्रविष्यताम् ।
सागरोऽम्बरसङ्काशः शरण्यो भविष्यति ॥ २१ ॥
इत्युक्त्वा स मयो दैत्यो दैत्यानामधिपस्तदा ।
त्रिपुरेण ययौ तूर्णं सागरं सिन्धुबान्धवम् ॥ २२ ॥
सागरे जलगम्भीरे उत्पपात पुरं वरम् ।
अवतस्थुः पुराण्येव गोपुराभरणानि च ॥ २३ ॥
अपक्रान्ते तु त्रिपुरे त्रिपुरारिस्त्रिलोचनः ।
पितामहमुवाचेदं वेदवादविशारदम् ॥ २४ ॥
पितामह ! दृढं भीता भगवन् ! दानवा हि नः ।
विपुलं सागरन्ते तु दानवाः समुपाश्रिताः ॥ २५ ॥
यतएव हि ते याता स्त्रिपुरेण तु दानवाः ।
ततएव रथं तूर्णं प्रापयस्व पितामह ! ॥ २६ ॥
सिंहनादं ततः कृत्वा देवा देवरथञ्च तम् ।
परिवार्य ययुर्हृष्टाः सायुधाः पश्चिमोदधिम् ॥ २७ ॥
ततोऽमरामरगुरुं परिवार्य भवं हरम् ।
मर्दयन्तो ययुस्तूर्णं सागरं दानवालयम् ॥ २८ ॥
अथ चारुपताकभूषितं पटहाडम्बरशङ्खनादितम् ।
त्रिपुरमभिसमीक्ष्य दैवता विविधघना ननदुर्यथा घनाः ॥२९॥
असुरवरपुरेऽपि दारुणो जलधरारवसदृशगह्वरः ।
स्तुतमयनिनादमिश्रितः प्रतिनिधिसंक्षुभितार्णवोपमः ॥३०॥
अथ भुवनपतिर्गतिः सुराणा-
मरिनगरं प्रददात् सुलब्धबुद्धिः ।

त्रिदशगणपतिमुवाच शक्रम्
त्रिपुरगतं सहसा निरीक्ष्य शत्रुम् ॥ २१ ॥
त्रिदशगणपते । निशामयैतत्
त्रिपुरनिकेतनमुत्तमं सुरेन्द्र ! ।
यमवरुणकुबेरषण्मुखैस्तत्
सह गणपैरपि हन्मि तावदेव ॥ २२॥
विहितपरबलाभिघातभूतम्
व्रज जलधेस्तु यतः पुराणि तस्युः ।
स रथवरगतोभवः समर्थो
ह्युदधिमगात् त्रिपुरं पुनर्निहन्तुम् ॥ २३ ॥
इति परिगणयन्सोदितेः सुता
ह्यवतस्थुर्लवणार्णवोपरिष्टात् ।
अभिभवत् त्रिपुरं स दानवेन्द्रम्
शरवर्षैर्मुसलैश्च वज्रमिश्रैः ॥ २४ ॥
अहमपि रथवर्यमास्थितः
सुरवरवर्य ! भवेय पृष्ठतः ।
असुरवरवधार्थमुद्यतानाम्
प्रतिविदधामि सुखयतेऽनघ ! ॥ २५ ॥
इति भववचनप्रचोदितो
दशशतनयन वपुःसमुद्यतः ।
त्रिपुरपुरजिघांसया हरिः
प्रविकसिताम्बुजलोचनो ययौ ॥ २६ ॥

---

## अथ सप्तत्रिंशदधिकशततमोऽध्यायः ।

सूत उवाच। मघवा तु निहन्तुं तानसुरानमरेश्वरः ।
लोकपाला ययुः सर्वे गणपालाश्च सर्वशः ॥ १ ॥
ईश्वरामोदिताः सर्वे उत्पेतुश्चाम्बरे तदा ।
खगतास्तु निरैक्षन्ते पक्षवन्त इवाचलाः ॥ २ ॥
प्रययुस्तत्पुरं हन्तुं शरीरमिव व्याधयः ।
महाडम्बरनिर्घोषैः पणवान् पटहानपि ।
नादयन्तः पुरो देवा दृष्टा त्रिपुरवासिभिः ॥ ३ ॥
हरः प्राप्त इतीवोक्ता बलिनस्ते महासुराः ।
आजग्मुः परमं क्षोभमत्यर्थेष्विव सागराः ॥ ४ ॥
सुरतूर्य्यरवं श्रुत्वा दानवा भीमदर्शनाः ।
निनेदुर्वादयन्तश्च नानावाद्यान्यनेकशः ॥ ५ ॥
भूयोद्दीरितवीर्य्यास्ते परस्परकृतागसः ।
पूर्वं देवाश्च दैत्याश्च नुदयन्तः परस्परम् ॥ ६ ॥
आक्रोशेऽपि समप्रख्ये तेषां देहनिकृन्तनम् ।
प्रवृत्तं युद्धमतुलं महारक्ततनिम्नगम् ॥ ७ ॥
श्वसन्त इव नागेन्द्रा भ्रमन्त इव पक्षिणः ।
गिरीन्द्रा इव कम्पन्तो गर्जन्त इव तोयदाः ॥ ८ ॥
जृम्भन्त इव शार्दूलाः प्रशान्त इव वायवः ।
प्रवृद्धोर्म्मितरङ्गाढ्याः क्षुभ्यन्त इव सागराः ॥ ९ ॥

प्रमथाश्च महाशूरा दानवाश्च महाबलाः।
युयुधुर्निश्चला भूत्वा वज्रा इव महाचलैः॥ १०॥
कामुकाणां निकृष्टानां बभूवुर्दारुणा रवाः।
कालानुगानां मेघानां यथा विश्रुति वायुना॥ ११॥
आहूय युद्धे मा भैषीः क यास्यसि हतोऽह्यसि।
प्रहराशु स्थितोऽस्मात्र एहि दर्शय पौरुषम्॥ १२॥
गृहाण छिन्धि भिन्धीति खादय मारय दारय।
इत्यन्योऽन्यं समूचाथ्य प्रययुर्यमसादनम्॥ १३॥
खड्गापवर्जिताः केचित्केचिच्छिन्नाः परश्वधैः।
केचिन्मुद्गरचूर्णाश्च केचिद्बाणैर्भराहताः॥ १४॥
पट्टिशैः मर्द्दिताः केचित्केचिच्छूलविदारिताः।
दानवाः शरपुङ्खाभाः सवना इव पर्वताः।
निपतन्त्यर्णवजले भीमनक्रतिमिङ्गिले॥ १५॥
त्वासुभिः सुनिरुद्धाङ्गैः पतमानैः सुरेतरैः।
सम्भूताणि शब्दः सञ्जातम्बुदनिस्वनः॥ १६॥
तेन शब्देन मकरा नक्राश्चिमितिमिङ्गिलाः।
मत्ता लोहितगन्धेन क्षोभयन्तो महार्णवम्॥ १७॥
परस्परेण कलहं कुर्वाणा भीममूर्त्तयः।
भ्रमन्तो भक्षयन्तश्च दानवानाञ्च लोहितम्॥ १८॥
सरथान् सायुधान् साश्वान् सवस्त्राभरणावृतान्।
जग्रसुस्तिमयो दैत्यान् द्रावयन्तो जलेचरान्॥ १९॥
अभ्रं यथा सुराणाञ्च प्रमथानां प्रवर्त्तते।
अम्बरेऽम्भसि च तथा युद्धं चक्रुर्जलेचराः॥ २०॥
यथा भ्रमन्ति प्रमथाः सदैत्यास्तथा भ्रमन्ते तिमयः समकराः॥

यथैव छिन्दन्ति परस्परन्तु तथैव क्रन्दन्ति विभिन्नदेहाः ॥२१॥
प्रधानमेरकरसं स्रवद्भिः सुरासुरैर्नकृतिभिश्चिलैश्च।
कृतो मुहूर्त्तेन समुद्रदेशः सरक्ततोयः समुदीर्णतोयः ॥२२॥
पूर्वं महाम्भोधरपर्वताभम्द्वारं महान्तं त्रिपुरस्य शक्रः।
निपीड्य तस्थौ महता बलेन युक्तोऽमराणां महता बलेन ॥२३॥
तथोत्तरं सत्तनुजो हरस्य बालार्कजाम्बूनदतुल्यवर्णः।
स्कन्दः पुरद्वारमथावरोह दृप्तोऽस्तशृङ्गं प्रपतन्निवार्कः ॥२४॥
यमश्च वित्ताधिपतिश्च देवो दण्डान्वितः पाशवरायुधश्च।
द्वावारिणस्तस्य पुरस्य द्वारं ताभ्यां तु तत्पश्चिमतो निरुद्धम् ॥२५॥
दृप्तारिचन्द्रस्तपनायुताभः स भास्वता देवरथेन देवः।
तद्दक्षिणद्वारमरेः पुरस्य रुद्धायतस्थौ भगवांस्त्रिनेत्रः ॥२६॥
तुङ्गानि वेश्मानि सगोपुराणि स्वर्णानि कैलासमहागप्रभाणि।
प्रह्लादरूपाः प्रमथावरुद्धा ज्योतींषि मेघाइव चाश्मवर्षाः ॥२७॥

उत्पाटय चोत्पाटय गृहाणि तेषाम्
सशैलमालासमवेदिकानि।
प्रक्षिप्य प्रक्षिप्य समुद्रमध्ये
कालाम्बुदाभाः प्रमथा विनेदुः ॥२८॥
रक्तानि चाशोकवनैर्युतानि
साशोकखण्डानि सकोकिलानि।
गृहाणि हे नाथ! पितः! सुतेति
भ्रातेति कान्तेति प्रियेति चापि।
उत्पाटयमानेषु गृहेषु नार्य,
अनार्यशब्दान्विविधान् प्रचक्रुः ॥२९॥

कालत्रपुतद्धयमापनाशे तस्मिन् पुरे युद्धमति प्रवृत्ते।

महासुराः सागरतुल्यवेगा गणेश्वराः कोपवृताः प्रतीयुः ॥२० ॥
परश्वधैस्तत्र शिलोपलैश्च त्रिशूलवज्रोत्तमकम्पनैश्च ।
शरीरसङ्घातपणं सुघोरं युद्धं प्रवृत्तं दृढवैरबद्धम् ॥ २१ ॥
अन्योन्यमुद्दिश्य विमर्दतां च प्रधावतां चैव विनिघ्नताञ्च ।
शब्दो बभूवामरदानवानां युगान्तकालेष्विव सागरानः ॥२२ ॥
मार्गाः पुरे लोहितकर्दमालाः स्वर्णेष्टकास्फाटिकभिन्नचित्राः ।
कृता मुहूर्त्तेन सुखेन गन्तुं छिन्नोरुमाङ्गाङ्घ्रिकराः करालाः॥२३॥
कोपावृताक्षः स तु तारकाख्यः संक्षेत्र सवृक्षः सगिरिर्निलीनः ।
तस्मिन् क्षणे द्वारवरं ररक्ष रुद्रं भवेनाद्भुतविक्रमेण ॥ २४ ॥
स तत्र प्राकारगतांश्च भूतांश्छातन्महानद्भुतवीर्यसत्वः ।
चचार चातीन्द्रियगर्वहृष्टः पुराद्विनिष्क्रम्य रणासघोरम् ॥२५॥
ततः स दैत्योत्तम पर्वताभो यथाञ्जना नाग इवाभिमत्तः ।
निवारितो रुद्ररथं जिघृक्षुर्यथार्णवः सर्पति चातिवेलः ॥ २६ ॥
शेषः सुधन्वा गिरिशश्च देवश्चतुर्मुखो यः सत्रिलोचनश्च ।
ते तारकाख्याभिगता गताजौ क्षोभं यथा वायुवशात् समुद्राः॥२७
शेषो गिरीशः सपितामहैश्चोत्क्षुभ्यमाणः स रथोऽम्बरस्थः ।
विभेद सन्धीषु बलाभिपन्नः कूजन्निनादांश्च करोति घोरान्॥२८॥
एकन्तु ऋग्वेदतुरङ्गमस्य पृष्ठे पदं न्यस्य वृषस्य चैकम् ।
तस्थौ भवः सोद्यतबाणचापः पुरस्य तत्सङ्गमभीक्षमाणः ॥२९॥
तदा भवपदन्यासाद्वयस्य वृषभस्य च ।
पितुस्तनाश्च दन्ताश्च पीडिताभ्यां त्रिशूलिना ॥ ४० ॥
ततः प्रभृति चाश्वानां स्तना दन्ता गवांस्तथा ।
गूढाः समभवंस्तेन चादृश्यत्व मुपागताः ॥ ४१ ॥
तारकाख्यस्तु भीमाख्यो रौद्रस्त्वान्तरैश्वषः ।

रुद्राग्निके सुसंरब्धो नन्दिना कुलनन्दिना ॥ ४२ ॥
परश्वधेन तीक्ष्णेन स नन्दी दानवेश्वरम् ।
तर्पयामास वै तद्वा चन्दनं गन्धदो यथा ॥ ४३ ॥
परश्वधहतः शूरः शैलादिः शरभो यथा ।
दुद्राव खड्गं निष्कृष्य तारकाख्यो गणेश्वरम् ॥४४॥
यज्ञोपवीतमादाय चिच्छेद च ननाद च ।
ततः सिंहरवो घोरः शङ्खशब्दश्च भैरवः ।
गणेश्वरैः कृतस्तत्र तारकाख्ये निरूहिते ॥ ४५ ॥
प्रमथा रसितं श्रुत्वा वादित्रजन मेव च ।
पार्श्वस्थः सुमहापार्श्वं विद्युन्मालिं मयोऽब्रवीत् ॥४६॥

बहुवदनवतां किमेष शब्दो-
बदतां श्रूयते भिन्नसागराभः ।
वद वचनमलीडिमालिन् किं तु इमे-
महागणपाला युयुधुर्गगजेन्द्राः ॥ ४७ ॥
इति मयवचनाङ्कुशार्दित-
स्तत्वविडमाली रविरश्मिमाली ।
रणशिरसि समागतः सुराणां
निजगादेद मरिन्दमोऽतिदर्पात् ॥ ४८ ॥
यमवरुणमहेन्द्ररुद्रवीर्य-
स्तवयशसो निधिर्वीरतारकाख्यः ।
सकलसमरशीर्षपर्वतेन्द्रो
युद्धायकपति हि तवरको गणेन्द्रैः ॥ ४९ ॥
ऋदित मुपनिशम्य तारकाख्याम्
रविदीप्तानलभीषणायताक्षम् ।

छपित सकलनैकलोमसत्वाः
प्रमथास्तोयमुचो यथा नदन्ति ॥ ५० ॥
इति सुहृदो वचनं निशम्य तत्वम्
तडिमालिः स मयस्तु वर्णमाली।
रणगिरस्त्वसिताञ्जनाचलाभो
जगदे वाक्य मिदं नवेन्दुमालिम् ॥ ५१ ॥
विद्युन्मालिन्न नः कालः साधितुं ह्यवहेलया।
करोमि विक्रमेणैतत् पुरं व्यसनवर्जितम् ॥ ५२ ॥
विद्युन्माली ततः क्रुद्धोमयश्च त्रिपुरेश्वरः।
गणान् जघ्नुरुद्राधिष्ठाः सहितास्तैर्महासुरैः ॥ ५३ ॥
येन येन ततो विद्युन्माली याति मयश्च सः।
तेन तेन पुरं शून्यं प्रमथोपहृतञ्जनम् ॥ ५४ ॥
अथ यमवरुणमृदङ्गघोषैः पणवडिण्डिमझर्झरस्वनप्रघोषैः।
करतलपुटैश्च सिंहनादैर्भवमभिपूज्य सुरास्ततस्थुः ॥ ५५ ॥
संपूज्यमानो दितिजैर्महात्मभिः
सहस्ररश्मिप्रतिमौजसं विभुः।
अभिष्टुतः सत्यरतैस्तपोधनै-
र्यथाऽस्तशृङ्गाभिगतो दिवाकरः ॥ ५६ ॥

---

अथाष्टात्रिंशदधिकशततमोऽध्यायः।

सूत उवाच। तारकाख्ये हते युद्धे उत्सार्य प्रमथान् मयः।
उवाच दानवान् भूयो भूयः सतु भयाहतान् ॥ १ ॥
भोः सुरेन्द्राधुना सर्वं निबोधध्वं प्रभाषितम्।
यत् कर्त्तव्यं मया चैव युष्माभिश्च महाबलैः ॥ २ ॥

पुष्यं समेष्यते काले चन्द्रश्चन्द्रनिभानना: ।
यदैकं त्रिपुरं सर्वं क्षणमेकं भविष्यति ॥ ३ ॥
कुरुध्वं निर्भया ! काले कोकिलाशंसितेन च ।
स कालः पुष्ययोगस्य पुरस्य च मया कृतः ॥ ४ ॥
काले तस्मिन् पुरे यस्तु सम्भावयति संहतिम् ।
स एनं कारयेच्चूर्णं ज्वलितैकेषुणा सुर: ॥५ ॥
योधा प्राणो बलं यच्च याच वो वैरिता सुराः ! ।
तत् कृत्वा हृदये चैव पालयध्वमिदं पुरम् ॥ ६ ॥
महेश्वररथं श्लोकं सर्वप्राणिन भीषणम् ।
विमुखीकुर्वतात्यर्थं यथा नोत्सृजते शरम् ॥ ७ ॥
मत एवं कृतेऽस्माभि स्त्रिपुरस्यापि रक्षणे ।
प्रतीक्षिष्यन्ति विवशाः पुष्ययोगं दिवौकसः ॥ ८ ॥
निशम्य तन्मयस्यैवं दानवा स्त्रिपुरालयाः ।
मुहुः सिंहरवं कृत्वा मयमूचुर्यमोपमाः ॥ ९ ॥
प्रयत्नेन वयं सर्वे कुर्मस्तव प्रभाषितम् ।
तथा कुर्मो यथा रुद्रो न मोक्ष्यति पुरे शरम् ॥ १० ॥
अद्य यास्यामः संग्रामे तद्रुद्रस्य जिघांसवः ।
कथयन्ति दितेः पुत्रा हृष्टा भिन्नतनूरुहाः ॥ ११ ॥
कल्पं स्थास्यन्ति वास्तव्यं त्रिपुरं शाश्वतं ध्रुवम् ।
अदानवं वा भविता नारायणपदत्रयम् ॥ १२ ॥
वयं न धर्मं हास्यामो यस्मिन् प्रीणति नो भवान् ।
अदैवतमदैत्यं वा लोकं द्रक्ष्यन्ति मानवाः ॥ १३ ॥
इति संमन्त्र्य हृष्टास्ते पुरान्तर्विबुधारयः ।
प्रदोषे मुदिता भूत्वा चेरुर्मन्मथचारताम् ॥ १४ ॥

मुहुर्मुहुः क्षीरोदयो भ्राम्त उदयाग्रं महामणिः
तमांस्युत्सार्य भगवांश्चन्द्रो जृम्भति सोऽम्बरम् ॥१५॥
कुमुदालङ्कृते हंसो यथा सरसि विस्तृते।
सिंहो यथा चोपविष्टो वैदूर्यशिखरे महान् ॥ १६ ॥
विष्णुर्यथा च विस्तीर्णे हारयोरसि संस्थितः।
तथावगाढे नभसि चन्द्रो त्रिनयनोद्भवः।
भ्राजते भ्राजयन् लोकान् सृजन् ज्योत्स्नारसं बलात् ॥१७॥
शीतांशावुदिते चन्द्रे ज्योत्स्नापूर्णे पुरे सुराः।
प्रदोषे ललितं चक्रुर्गृहमात्मानमेव च ॥ १८ ॥
रथ्यासु राजमार्गेषु प्रासादेषु गृहेषु च।
दीपाश्चम्पकपुष्पाभा नाल्पस्नेहप्रदीपिताः।
तदा गृहेषु ते दीपाः स्नेहपूर्णाः प्रदीपिताः ॥ १९ ॥
गृहाणि वसुमन्त्येषां सर्वरत्नमयानि च।
ज्वलन्तो दीपयन्तीयान् चन्द्रोदयमिव ग्रहाः ॥ २० ॥
चन्द्रांशुभिर्भासमानमन्तर्दीपैः प्रदीपितम् ॥।
उपद्रवैः कुलमिव पीयते त्रिपुरे तमः ॥ २१॥
तस्मिन् पुरे वै तरुणप्रदोषे
चन्द्राट्टहासे तरुणप्रदोषे।
रत्यर्थिनो वै दनुजा गृहेषु
सहाङ्गनाभिः सुचिरं विरेमुः ॥ २२ ॥
विनोदिता ये तु वृषध्वजस्य पश्चेषवस्ते मकरध्वजेन।
तस्मात्पुरेष्वासुरपुङ्गवेषु स्वाङ्गाङ्गनाः स्वेदयुता बभूवुः ॥ २३ ॥
कलप्रलापेषु च दानवीनां वीणाप्रलापेषु च मूर्च्छितांस्तु।
मत्तप्रलापेषु च कोकिलानां स चापबाणो मदनो ममन्थ ॥ २४ ॥

तमांसि नैशानि द्रुतं निहत्य
ज्योत्स्नावितानेन जगद्वितत्य ।
खे रोहिणीं तां च प्रियां समेत्य
चन्द्रः प्रभाभिः कुरुतेऽधिराज्यम् ॥ २५ ॥
स्थित्वैव कान्तस्य तु पादमूले
काचिद्वरस्त्रीस्वकपोलमूले ।
धत्ते विशेषं रुदती करोति
तेनाननं स्वं समलङ्करोति ॥ २६ ॥

दृष्ट्वाननं मण्डलदर्पणस्थं मद्वाप्रभा मे मुखजेति जल्पा ।
स्मृत्वा वरस्त्रीरमणेरितानि तेनैव भावेन रतीमवाप ॥ २७ ॥
रोमाञ्चितैर्गात्रवरैर्युवत्यो रतानुरागाद्रमणेन चान्याः ।
स्वयं द्रुतं यान्ति मदाभिभूताः क्षपा यथा चार्कदिनावसाने ॥२८
पपौ यथा चातिरसानुविद्धा विमार्गितान् याच प्रियं प्रमत्ता ।
काचित्प्रियस्यातिचिरात्प्रसन्ना आभीतालापेषु च सम्प्रसन्ना ॥२९॥
गोशीर्षयुक्तैर्हरिचन्दनैश्च पङ्काङ्किताश्चोरधरा सुरीणाम् ।
मनोज्ञरूपा रुचिरा बभूवुः पूर्णामृतस्येव सुवर्णकुम्भाः ॥ ३०॥
क्षताधरोष्ठा द्रुतदोषरक्ता ललन्ति दैत्या दयितासु रक्ताः ।
तन्त्रीप्रलापा त्रिपुरेषु रक्ताः स्त्रीणां प्रलापेषु पुनर्विरक्ताः ॥३१॥
क्वचित् प्रवृत्तं मधुराभिगानं कामस्य बाणैः सुकृतं निधानम् ।
आपानभूमीषु सुखप्रमेयं गेयं प्रवृत्तं त्वथ साधयन्ति ॥ ३२ ॥
गेयं प्रवृत्तं त्वथ बोधयन्ति केचित् प्रियां तत्र च साधयन्ति ।
केचित्प्रियां सम्प्रति बोधयन्ति सम्बुध्य सम्बुध्य च रामयन्ति ॥३३॥
चूतप्रसूनप्रभवः सुगन्धः सर्वे गते वै त्रिपुरे बभूव ।
समर्मरो नूपुरमेखलानां शब्दश्च सम्बाधति कोकिलानाम् ॥३४॥

प्रियावगूढा दयितोपगूढा काचित्प्ररूढाङ्गरुहापि नारी ।
सुधाक्षयाख्याहृदयप्रवानां नवाम्बुसिक्ता इव भूमिरासीत् ॥ ३७ ॥
शशाङ्कपादैरुपशोभितेषु प्रासादवर्येषु वराङ्गनानाम् ।
पानेन खिन्नादयितातिवेलकपोलमाघ्रासि च किं ममेदम् ।
आरोह मे श्रोणिमिमां विशालां पीनोन्नताकाञ्चनमेखलाढ्याम्
रथ्यासु चन्द्रोदयभासितासु
सुरेन्द्रमार्गेषु च विस्तृतेषु ।
दैत्याङ्गना यूथगता विभान्ति
तारा यथा चन्द्रमसोदिवान्ते ॥ ३८ ॥
घण्टाट्टहासेषु च चामरेषु
प्रेङ्खासु चान्यामदलोलभावात् ।
सन्दोलयन्ते कलसम्प्रहासाः
प्रावाच काञ्ची गुणमूक्ष्मनादा ॥ ३९ ॥
अम्लान मालान्वित सुन्दरीणाम्
पर्याय पर्याऽस्ति च हर्षितानाम् ।
शृण्वन्ति वाचः कलधौतकल्पा
वापीषु चान्ये कलहंसशब्दाः ॥ ४० ॥
काञ्चीकलापश्च सहाङ्गरागः
प्रेङ्खासतन्द्रारुरुनाश्च भावाः ।
छिन्दन्ति तासामसुराङ्गनानाम्
प्रियाननानामृगशावनेत्रानाम् ॥ ४१ ॥
चित्राम्बरश्चोद्धृतकेशपाशः सन्दोल्यमानः शशुभे ऽसुरीणाम् ।
सुधाङ्क वेशाभरणैरुपेतसाराङ्गणैर्ज्योतिरिवास चन्द्रः ॥४२ ॥

चन्द्रोत्तमादुच्छ्वसितैश्छिन्नमूलैः काञ्चीभ्रष्टैर्मणिभिर्विप्रकीर्णैः
दोलाभूमिस्तैर्विचित्रा विभाति चन्द्रस्य पार्श्वोपगतैर्विचित्रा॥४३
स चन्द्रिके सोपवने प्रदोषे रुतेषु वृन्देषु च कोकिलानाम् ।
शरव्ययं प्राप्य पुरेऽसुराणां प्रक्षीणवाणो मदनश्चचार ॥४४ ॥
इति तत्र पुरेऽमरद्विषाणां सपदि हि पश्चिमकौमुदी तदासीत् ।
रणशिरसि पराभविष्यतां वै भवतुरगैः कृतसञ्ज्ञया श्रियाम्॥४५॥

चन्द्रोऽथ कुन्दकुसुमाकरहारवर्णो
ज्योत्स्नावितानरहितोऽभ्रसमानवर्णः ।
विच्छायतां हि समुपेत्य न भाति तद्व-
द्भाग्यक्षये धनपतिश्च नरोविवर्णः ॥ ४६ ॥
चन्द्रप्रभामरुणसारथिनाभिभूय
सन्तप्तकाञ्चनरथाङ्गसमानविम्बः ।
स्थित्वोदयाग्रमुकुटे वसुरेव सूर्यो
भात्यम्बरे तिमिरतोयवहान्तरिष्यन् ॥ ४७ ॥

---

एकोनचत्वारिंशदधिकशततमोऽध्यायः ।

सूत उवाच । उदिते तु सहस्रांशौ मेरौ भासाकरे रवौ ।
नर्दद्भिर्व कुलं कृत्स्नं युगान्त इव सागराः ॥ १ ॥
सहस्रनयनो दैत्य स्वतः शक्रः पुरन्दरः ।
सविस्मदः सबलश्च त्रिपुरं प्रययौ हरः ॥ २ ॥
तं नानाविधरूपाश्च प्रमथाति प्रमाथिनः ।
ययुः सिंहरवैर्घोरैर्वादित्र निनदैरपि ॥ ३ ॥
ततोवादितवादित्रैस्सातपत्रैर्महाद्रुमैः ।
बभूव तद्बलं दिव्यं वनं प्रचलितं यथा ॥४ ॥

तदा पतन्तं संप्रेक्ष्य रौद्रं रुद्रबलं महत्।
सङ्क्षोभो दानवेन्द्राणां समुद्र प्रतिमो बभौ ॥ ५ ॥
ते चासीन् पट्टिशाञ्छक्तीः शूलदण्डपरश्वधान्।
शरासनानि वज्राणि गुरूणि मुसलानि च ॥ ६ ॥
प्रगृह्य कोपरक्ताक्षाः सपक्षा इव पर्वताः।
निजघ्नुः पर्वतप्राय घना इव तपात्यये ॥ ७ ॥
स विद्युन्मालिनस्ते वै समयादिति नन्दनाः।
मोदमानाः समासेदुर्देवैर्देवैः सुरारयः ॥ ८ ॥
मर्त्यश्चक्षतबुद्धीनां जये चानिश्चितात्मनाम्।
अबलानाञ्च मूर्च्छासीदबलावयवा इव ॥ ९ ॥
विगर्जन्त इवाम्भोदा अम्भोद सदृशत्विषः।
प्रयुद्धा युद्धकुशलाः परस्पर कृतागसः ॥ १० ॥
धूमायन्तो ज्वलन्तश्च आयुधैरस्त्रवर्चसैः।
कोपाद्धा युद्धलुब्धाश्च कुट्टयन्ते परस्परम् ॥ ११ ॥
वज्राहताः पतन्त्यन्ये वाणैरन्ये विदारिताः।
अन्ये विदारिताश्चक्रैः पतन्त्युदधेर्जले ॥ १२ ॥
छिन्नस्रग्दामहाराश्च प्रभ्रष्टाम्बरभूषणाः।
तिमिनक्रगणे चैव पतन्ति प्रमथाः सुराः ॥ १३ ॥
गदानां मुसलानाञ्च तोमराणां परश्वधाम्।
वज्रशूलर्ष्टिपातानां पट्टिशानाञ्च सर्वतः ॥ १४ ॥
गिरिशृङ्गोपमानाञ्च प्रेरितानां प्रमन्युभिः।
सजवानां दानवानां सधूमानां रवित्विषाम्।
आयुधानां महानोघः सागरौघे पतत्यपि ॥ १५ ॥
प्रहृष्ट वेगैस्तैस्तत्र सुरासुरकरेरितैः।

चायुधैस्तस्य गच्छतः क्रियते सङ्क्षयो महान् ॥ १६ ॥
वृत्राणाङ्गजयोर्युद्धे यथा भवति सङ्क्षयः ।
देवासुरगणैस्तद्वत्तिमिनन्दनयोऽभवत् ॥ १७ ॥
विद्युन्माली च वेगेन विद्युन्माली इवाम्बुदः ।
विद्युन्माल्यनोमार्दो नन्दीश्वरमभिद्रुतः ॥ १८ ॥
सतन्तमोऽरि वदनं प्रनदन् वदतांवरः ।
उवाच युधि शैलादिं दानवोऽम्बुधि निस्वनः ॥१९॥
युद्धाकाङ्क्षी तु बलवान् विद्युन्माली समागतः ।
यदि त्विदानीं मे जीवन्मुच्यसे नन्दिकेश्वर ! ।
न विद्युन्मालि इननं वचोभिर्युधि दानवः ॥ २० ॥
तमेवं वादिनं दैत्यं नन्दीशं जपतांवरः ।
उवाच प्रहरंस्तत्र वाक्यलङ्कारवद्वचः ॥ २१ ॥
दानवा ! धर्मकामानां नैषोऽवसर इत्यतः ।
गर्जो हन्तुं किमात्मानं जाति दोषाद्विहंहसि ॥२२॥
यदि तावन्मया पूर्वं हतोऽसि पशुवद्यथा ।
इदानीं वा कथं नाम न हिंस्ये नतु दूषणम् ॥२३॥
सागरं तरते दोर्भ्यां पातयेद्यो दिवाकरम् ।
सोऽपि मां प्राप्नुयान्नैव चक्षुर्भ्यां समवेक्षितुम् ॥२४॥
इत्येवं वादिनं तत्र नन्दिनं तन्निभोबले ।
विभेदेकेषुणा दैत्यः करणार्कं इवाम्बुदम् ॥ २५ ॥
वक्षसः प्रवरस्तस्य पपौ रुधिरमुत्तमम् ।
सूर्य्यस्त्वाम्र प्रभावेण मयूखैव जलं यथा ॥ २६ ॥
स तेन सुप्रहारेण प्रथमघाति रोषितः ।
हस्तेन वृक्षमुत्पाटय चिक्षेप गजराडिव ॥ २७ ॥

वायुपुत्रः स च तदा शौर्य्यं पुष्पो महारवः ।
विद्युन्मालि शरैश्छिन्नः पपात पतगेशवत् ॥ २८ ॥
वृषमालोक्य तं छिन्नं दानवेन शरेषुभिः ।
रोषमाहारयत्तीव्रं नन्दीश्वर मुविग्रहः ॥ २९ ॥
सोऽस्य करमाराद्वै रविशक्र करप्रभम् ।
दुद्राव हन्तुं स क्रूरं महिषं गजराडिव ॥ ३० ॥
तमापतन्तं वेगेन वेगवान् प्रसभं बलात् ।
विद्युन्माली शरशतैः पूरयामास नन्दिनम् ॥ ३१ ॥
शर कण्टकिताङ्गो वै शैलादिः सोऽभवत् पुनः ।
करेर्गृह्य रथं तस्य महतः प्रययौ जवात् ॥ ३२ ॥
विलम्बिताश्वोविशिरो भ्रमितश्च रणे रथः ।
पपात मुनिशापेन सादित्योऽर्क रथो यथा ॥ ३३ ॥
अन्तरान्निर्गतश्चैव मायया स दितेः सुतः ।
आजघान तदा शक्त्या शैलादिं समवस्थितम् ॥ ३४ ॥
तामेव तु विनिष्कृष्य शक्तिं शोणितभूषिताम् ।
विद्युन्मालिं समुद्दिश्य चिक्षेप प्रमथाग्रणीः ॥ ३५ ॥
तया भिन्न तनुत्राणो विभिन्न हृदयस्त्वपि ।
विद्युन्माल्य पतद् भूमौ वज्राहत इवाचलः ॥३६॥
विद्युन्मालिनि निहते सिद्धचारण किन्नराः ।
साधु साध्विति चोक्ता ते पूजयन्त उमापतिम् ॥३७॥
नन्दिना सादिते दैत्ये विद्युन्माली हते मयः ।
ददाह प्रमथानीकं वनमग्निरिवोद्धतः ॥ ३८ ॥
शूलनिर्दारितोरस्का गदाचूर्णितमस्तकाः ।
इषुभिर्गाढ विद्धाश्च पतन्ति प्रमथार्णवे ॥ ३९ ॥

अथ वज्रधरो यमोऽर्द्दः स च नन्दी स च षण्मुखोगुहः ।
मयमसुर वीरसम्महतं विविशुः शरवरैर्हतारयः ॥ ४० ॥
नागन्तु नागाधिपतिः प्रताप मयोविदार्येषु वरेण तूर्णम् ।
मयश्च विद्याधिपतिश्च विद्या ररास मत्ताम्बुदवत्तदानीम् ॥४१॥

ततः शरैः प्रमथगणेन दानवा
हताहताश्चोत्तमतेजविक्रमाः ।
भयानुविद्धा त्रिपुरं प्रवेशिता
यथा शिवधनुर्धरेण संयुगे ॥ ४२ ॥
ततश्च शङ्खानकभेरिमर्द्दलाः
ससिंहनादा दनु पुनमङ्कदाः ।
कपर्दिसैन्ये प्रवभुः समन्ततो
निपात्यमाना युधि वज्रसन्निभाः ॥ ४३ ॥

अथ दैत्य पुराभावे पुष्ययोगो बभूव ह ।
वभूव चापिसंयुक्तं तद्योगेन पुरत्रयम् ॥ ४४ ॥
ततोवाणं त्रिधा इव त्रिदैवतमयं हरः ।
मुमोच त्रिपुरे तूर्णं त्रिनेत्र त्रिपदाधिपः ॥ ४५ ॥
तेन मुक्तेन बाणेन बाणपुष्प समप्रभम् ।
आकाशं स्वर्णसङ्काशं कृतं सूर्येण रञ्जितम् ॥ ४६ ॥
मुक्ता त्रिदैवतमयं त्रिपुरे त्रिदशः शरम् ।
धिग्धिङ् मामिति चक्रन्द कष्टं कष्टमिति ब्रुवन् ॥४७॥
वैधुर्यं दैवतं दृष्टा शैलादिर्गजवक्त्रतः ।
किमिदन्त्विति पप्रच्छ शूलपाणिं महेश्वरम् ॥ ४८ ॥
ततः शशाङ्कतिलकः कपर्दी परमार्तवत् ।
उवाच नन्दिनं भक्तः स मयोऽद्य विनंक्ष्यति ॥४९॥

अथ नन्दीश्वरस्तूर्णं मनोमारुतवद्बली।
शरे त्रिपुरमायाति त्रिपुरं प्रविवेश सः ॥ ५० ॥
स मयस्येक्ष्य गणपः प्राह काञ्चनसन्निभः।
विनाशं त्रिपुरस्यास्य प्राप्तो मय! सुदारुणः ॥५१॥
अनेनैव शरेण त्वमपक्राम मयोऽभ्यहम्।
श्रुत्वा तन्नन्दि वचनं दृढभक्तो महेश्वरे।
तेनैव गृहमुख्येन त्रिपुरादपसर्पितः ॥ ५२ ॥
सोऽपीषुः पत्रपुटवद्दग्ध्वा तत्पुरत्रयम्।
त्रिधा इव हुताशश्च सोमो नारायणस्तथा ॥ ५३ ॥
शरतेजः परीतानि पुराणि द्विजपुङ्गवाः!।
दुष्प्रदोषादह्यन्ते कुलान्यूर्ध्वं यथा तथा ॥ ५४ ॥
मेरुकैलासकल्पानि मन्दरायनिभानि च।
सकपाट गवाक्षाणि वलिभिः शोभितानि च ॥५५॥
सप्रासादानि रम्याणि कूटागारोत्कटानि च।
सजलानि समाख्यानि सावलोकनकानि च ॥ ५६॥
बहुध्वज पताकानि स्वर्णरौप्य मयानि च।
गृहाणि तस्मिं स्त्रिपुरे दानवानामुपद्रवे।
दह्यन्ते दहनाभानि दहनेन सहस्रशः ॥ ५७ ॥
प्रासादाग्रेषु रम्येषु वनेषू पवनेषु च।
वातायन गताश्चान्याश्चाकाशस्य तलेषु च ॥ ५८ ॥
रमणैरुपगूढाश्च रमन्त्यो रमणैः सह।
दह्यन्ते दानवेन्द्राणामग्निनाश्च पिताः स्त्रियः॥५९॥
काचित् प्रियं परित्यज्य अशक्ता गन्तु मन्यतः।
पुरः प्रियस्य पश्चत्वङ्गताग्नि वदने भयम् ॥ ६० ॥

उवाच शतपत्राक्षी सास्राक्षीव कृताञ्जलिः ।
हव्यवाहन ! भार्याहं परस्य परतापन ! ।
धर्मसाक्षी त्रिलोकस्य न मां स्प्रष्टुमिहार्हसि ॥ ६१ ॥
शाखिलस्य मया देव ! शिवया च शिवप्रभ ! ।
परेण प्रेहि मुक्तेदं गृहस्व दयितं हि मे ॥ ६२ ॥
एका पुत्रमुपादाय बालकं दानवाङ्गना ।
हुताशन समीपस्था इत्युवाच हुताशनम् ॥ ६३ ॥
बालोऽयं दुःख लब्धश्च मया पावक ! पुत्रकः ।
नार्हस्येनमुपादातुं दयितं षण्मुखप्रिय ! ॥ ६४ ॥
काश्चित् प्रियान् परित्यज्य पीडिता दानवाङ्गनाः ।
निपतन्त्यर्णवजले शिञ्जमानविभूषणाः ॥ ६५ ॥
तात पुत्रेति मातेति मातुलेति च विह्वलम् ।
चक्रन्दुस्त्रिपुरे नार्यः पावकज्वालवेपिताः ॥ ६६ ॥
यथा दहति शैलाग्निः साम्बुजं जलजाकरम् ।
तथा स्त्री वक्त्र पद्मानि चादहत्त्रिपुरेऽनलः ॥ ६७ ॥
तुषारराशिः कमलाकराणां यथा दहत्यम्बुजकानि शीते ।
तथैव सोऽग्निस्त्रिपुराङ्गनानां ददाह वक्त्रेक्षणपङ्कजानि ॥ ६८ ॥
शराग्निपातात् समभिद्रुतानां तत्राङ्गनानामति कोमलानाम्
बभूव काञ्चीगुणनूपुराणामाक्रन्दितानाञ्च रवोऽतिमिश्रः ॥ ६९ ॥
दग्धार्द्धचन्द्राणि सवेदिकानि विशीर्णहर्म्याणि सतोरणानि ।
दग्धानि दग्धानि गृहाणि तत्र पतन्ति रक्षार्थमिवार्णवौघे ॥ ७० ॥
गृहैः पतद्भिर्ज्वलनावलीढैस्तत्सीत्समुद्रे सलिलं प्रतप्तम् ।
कुपुत्रदोषैः प्रहतानु विद्धं यथाकुलं याति धनान्वितस्य ॥ ७१ ॥
गृहप्रतापैः क्वथितं समन्तात्तदार्णवे तोयमुदीर्णवेगम् ।

विवासयामास तिमीन् सनक्रां
स्तिमिङ्गिलांस्तत्क्षुभितांस्तथान्यान् ॥ ७२ ॥

सगोपुरो मन्दरपादकल्पः प्राकार वर्यस्त्रिपुरे च सोऽग्र।
तैरेव सार्द्धं भवनैः पपात शब्दं महान्तं जनयन् समुद्रे ॥ ७३॥
[redacted] शृङ्गैर्भवनैर्यदासीत् सहस्रशृङ्गः स इवाचलेशः।
नामावशेषं त्रिपुरं प्रजज्ञे हुताशनाहार बलिप्रयुक्तम् ॥ ७४ ॥
प्रदह्यमानेन पुरेण तेन जगत्सपाताल दिवं प्रतप्तम्।
दुःखं महत्प्राप्य जलावमग्नं यस्मिन् महान् सोधवरो मयस्य ॥ ७५

तद्दैवेशोवचः श्रुत्वा इन्द्रो वज्रधरस्तदा।
शशाप तद्गृहस्थापि मयस्यादिति नन्दनः ॥ ७६ ॥
अप्रवेश्यम प्रतिष्ठञ्च भयेन च समाहतम्।
भविष्यति मय गृहं नित्यमेव यथा ऽनलः ॥ ७७ ॥
यस्य यस्य तु देशस्य भविष्यति पराभवः।
द्रक्ष्यन्ति त्रिपुरं खण्डं तत्रेदं नाशगा जनाः।
तदेत दद्यापि गृहं मयस्यामय वर्जितम् ॥ ७८ ॥

ऋषय ऊचुः। भगवन्! स मयो येन गृहेण प्रपलायितः।
तस्य नो गतिमाख्याहि मयस्य चमसोद्भव! ॥ ७९ ॥

सूत उवाच। दृश्यते दृश्यते यत्र ध्रुवस्तत्र मयास्पदम्।
देवद्विड् तु मयस्तातः स तदाखिन्नमानसः।
ततश्च यतोऽन्य लोकेस्मिंस्त्राणार्थं वै चकार सः ॥ ८० ॥
तत्रापि देवताः सन्ति शशीर्याश्च सुरोत्तमाः।
तत्राशक्तं ततो गन्तुं तच्चैकं पुरमुत्तमम् ॥ ८१ ॥
शिवः स्रष्टा गृहं प्रादान् मयस्यैव गृहार्थिनम्।
विरराम सहस्राक्षः पूजयामास चेश्वरम्।

पूजयमानश्च भूतैश्च सव तुष्टुवुरीश्वरम् ॥ ८२ ॥
संपूज्यमानं त्रिदशैः समोक्ष्य गणैर्गणेशाधिपतिन्तु मुख्यम् ।
हर्षाद्ववल्गुर्जहसुश्च देवा जग्मुर्ननर्दुश्च विषाणहस्ताः ॥८३॥
पितामहं वन्द्य ततो महेशं प्रगृह्य चापं प्रविसृज्य भूतान् ।
रथाच्च सम्पत्य हरेषु दग्धं त्रिपुरं पुरं तत्र कृतालये च ॥८४॥

य इमं रुद्र विजयं पठते विजयावहम् ।
विजयन्तस्य कृत्येषु ददाति वृषभध्वजः ॥ ८५ ॥
पितृणां चापि श्राद्धेषु य इमं श्रावयिष्यति ।
अनन्तं तस्य पुण्यं स्यात् सर्वयज्ञफलप्रदम् ॥ ८६ ॥
इदं स्वस्त्ययनं पुण्यमिदं पुंसवनं महत् ।
इदं श्रुत्वा पठित्वा च यान्ति रुद्र सलोकताम् ॥८७॥

---

अथ चत्वारिंशदधिकशततमोऽध्यायः ।

ऋषय उचुः । कथं गच्छत्यमावास्यां मासिमासि दिवं नृप ।
ऐलः पुरूरवाः सूत ! तर्पयेत कथं पितॄन् ।
एतमिच्छामहे श्रोतुं प्रभावन्तस्य धीमतः ॥ १ ॥
सूत उवाच । तस्य चाहं प्रवक्ष्यामि प्रभावं विस्तरेण तु ।
ऐलस्य दिवि संयोगं सोमेन सह धीमता ॥ २ ॥
सोमाच्चैवामृत प्राप्तिः पितृणां तर्पणं तथा ।
सौम्या बर्हिषदः काव्या अग्निष्वात्तास्तथैव च ॥ ३॥
यदा चन्द्रश्च सूर्यश्च नक्षत्राणां समागतौ ।
अमावास्यां निवसत एकस्मिन्नथ मण्डले ॥ ४ ॥
तदा स गच्छति द्रष्टुं दिवाकर निशाकरौ ।
अमावास्याममावास्यां मातामह पितामहौ ॥ ५ ॥

अभिवाद्य तु तौ तत्र कालापेक्षः स तिष्ठति।
प्रपश्यन्द ततः सोममर्चयित्वा परिश्रमात्॥ ६॥
ऐलः पुरूरवा विद्वान् मासि श्राद्ध चिकीर्षया।
ततः स दिवि सोमं वै ह्युपतस्थे पितॄनपि॥ ७॥
द्विलवं कुहुमात्रञ्च तावुभौ तु निधाय सः।
सिनीवाली प्रमाणाल्प कुहूमात्र व्रतोदये॥ ८॥
कुहूमात्रं पितृद्देशं ज्ञात्वा कुहुमुपासते।
तमुपास्य ततः सोमं कलापेक्षी प्रतीक्षेत॥ ९॥
स्वधा मृतन्तु सोमाद्वै वसंस्रैवाच्च तृप्तये।
दशभिः पञ्चभिश्चैव स्वधा मृतपरिस्रवैः।
कृष्णपक्ष भुजां प्रीतिर्दुह्यते परमांशुभिः॥ १०॥
सद्योभिक्षरता तेन सौम्येन मधुना च सः।
निवापेष्वथ दत्तेषु पित्र्येण विधिना तु वै॥ ११॥
स्वधा मृतेन सौम्येन तर्पयामास वै पितॄन्।
सौम्या वर्हिषदः काव्या अग्निष्वात्ता तथैव च॥१२॥
ऋतुरग्निः स्मृतो विप्रैर्ऋतुं सम्वत्सरं विदुः।
जज्ञिरे ऋतवस्तस्मादृतुभ्यो ह्यार्त्तवाभवन्॥ १३॥
पितरोऽर्त्तवोऽर्द्धमासा विज्ञेया ऋतुसूनवः।
पितामहास्तु ऋतवोह्यमावास्याब्दसूनवः।
प्रपितामहाः स्मृता देवाः पञ्चाब्दा ब्रह्मणः सुताः॥१४॥
सौम्या वर्हिषदः काव्या अग्निष्वात्ता इति त्रिधा।
गृहस्था ये तु यज्वानो हविर्यज्ञार्त्तवाश्रये।
स्मृता वर्हिषदस्ते वै पुराणे निश्चयं गताः॥ १५॥
गृहमेधिनश्च यज्वानो अग्निष्वात्तार्त्तवाः स्मृताः।

अष्टका पतयः काव्याः पञ्चाब्दांस्तु निबोधत ॥ १६ ॥
तेषु सम्वत्सरो ह्यग्निः सूर्य्यस्तु परिवत्सरः ।
सोमस्त्विद्वत्सरश्चैव वायुश्चैवानुवत्सरः ॥ १७ ॥
रुद्रस्तु वत्सरस्तेषां पञ्चाब्दाये युगात्मकाः ।
कालेनाधिष्ठितस्तेषु चन्द्रमाः स्रवते सुधाम् ॥ १८ ॥
एते स्मृता देव कृत्याः सोमपाश्चोष्मपाश्च ये ।
तां स्तेन तर्पयामास यावदासीत्पुरूरवाः ॥ १९ ॥
यस्मात्प्रसूयते सोमो मासि मासि विशेषतः ।
ततः स्वधामृतं तद्वै पितॄणां सोमपायिनाम् ।
एतत्तदमृतं सोममवाप मधुचैव हि ॥ २० ॥
ततः पीतसुधं सोमं सूर्य्योऽसावेकरश्मिना ।
आप्याययते सुषुम्नेन सोमन्तु सोमपायिनम् ॥ २१ ॥
निःशेषा वैकलाः पूर्वायुगपद्व्यापयन् पुरा ।
सुषुम्णाप्याय मानस्य भागं भागमहः क्रमात् ॥२२॥
कलाः क्षीयन्ति कृष्णास्ताः शुक्लाह्याप्याययन्ति च ।
एवं सा सूर्यवीर्येण चन्द्रस्याप्यायितातनः ॥ २३ ॥
पौर्णमास्यां सदृश्येत शुक्लः सम्पूर्णमण्डलः ।
एवमाप्यायितः सोमः शुक्लपक्षेष्वहः क्रमात् ।
देवैः पीत सुधं सोमं पुराप्यात्पिविद्रविः ॥ २४ ॥
पीतं पञ्चदशाहन्तु रश्मिनैकेनभास्करः ।
आप्याय यत् सुषुम्णेन भागं भागमहः क्रमात् ॥२५॥
सुषुम्णाप्याययमानस्य शुक्ला वर्द्धन्ति वै कलाः ।
तस्माद्ध्रसन्ति वै कृष्णाः शुक्लाप्याययन्ति च ॥२६॥
एवमाप्याय्यते सोमः क्षीयते च पुनः पुनः ।

समृद्धिरेवं सोमस्य पक्षयोः शुक्लकृष्णयोः ॥ २७ ॥
इत्येष पितृमान् सोमः स्मृतस्तद्वत् सुधात्मकः।
कान्तः पञ्चदशैः सार्द्धं सुधामृतपरिस्रवैः ॥ २८ ॥
अतः परं प्रवक्ष्यामि पर्वणां सन्धयश्च याः।
यथा ग्रथ्नन्ति पर्वाणि आवृत्तादिक्षुवेणुवत् ॥ २९ ॥
तथाब्दमासाः पक्षाश्च शुक्लाः कृष्णास्तु वै स्मृताः।
पौर्णमास्यास्तु यो भेदो ग्रन्थयः सन्धयस्तथा ॥ ३० ॥
अर्द्धमासस्य पर्वाणि द्वितीयाप्रभृतीनि च।
अग्न्याधानक्रिया यस्मात्रीयन्ते पर्वसन्धिषु ॥ ३१ ॥
तस्मात्तु पर्वणोह्यादौ प्रतिपद्यादिसन्धिषु।
सायाह्ने अनुमत्याश्च द्वौ लवौ काल उच्यते।
लवौ द्वावेव राकायाः कालो ज्ञेयोऽपराह्णिकः ॥३२॥
प्रकृतिः कृष्णपक्षस्य कालेऽतीतेऽपराह्णिके।
सायाह्ने प्रतिपद्येष स कालः पौर्णमासिकः ॥ ३४ ॥
व्यतीपाते स्थिते सूर्ये लेखादूर्द्ध्वं युगान्तरम्।
युगान्तरोदिते चैव चन्द्रे लेखोपरिस्थिते ॥ ३५ ॥
पूर्णमासव्यतीपातौ यदा पश्येत्परस्परम्।
तौ तु वै प्रतिपद्यावत्तस्मिन् काले व्यवस्थितौ ॥३६॥
तत्कालं सूर्यमुद्दिश्य दृष्ट्वा संख्यातु मर्हसि।
स चैव सत्क्रियाकालः षष्ठः कालोऽभिधीयते ॥३७॥
पूर्णेन्दुः पूर्णपक्षे तु रात्रिसन्धिषु पूर्णिमा।
तस्मादाप्यायते नक्तं पौर्णमास्यां निशाकरः ॥३८॥
यदान्योन्यवतीपाते पूर्णिमा प्रेक्षते दिवा।

चन्द्रादित्योऽपराह्णे तु पूर्णत्वात् पूर्णिमा स्मृता ॥ ३९
यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह ।
तस्मादनुमतिर्नाम पूर्णत्वात् पूर्णिमा स्मृता ॥ ४० ॥
अत्यर्थं राजते यस्मात् पौर्णमास्यां निशाकरः ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ॥ ४१ ॥
अमावसेतामृक्षे तु यदा चन्द्रदिवाकरौ ।
एका पञ्चदशी रात्रिरमावास्या ततः स्मृता ॥ ४२ ॥
उद्दिश्य ताममावास्यां यदा दर्शं समागतौ ।
अन्योऽन्यं चन्द्रसूर्यौ तु दर्शनाद्दर्श उच्यते ॥ ४३ ॥
द्वौ द्वौ लवावमावास्यां सकालः पर्वसन्धिषु ।
द्व्यक्षरः कुहुमात्रश्च पर्वकालस्तु स स्मृतः ॥ ४४ ॥
दृष्टचन्द्रा त्वमावास्या मध्याह्नप्रभृतीह वै ।
दिवा तदूर्ध्वं रात्र्यान्तु सूर्ये प्राप्ते तु चन्द्रमाः ।
सूर्येण सहसोऽच्छेद्यस्ततः प्रातस्तनात्तु वै ॥ ४५ ॥
समागम्य लवौ द्वौ तु मध्याह्नान्निपतन्रविः ।
प्रतिपच्छुक्लपक्षस्य चन्द्रमाः सूर्यमण्डलात् ॥ ४६ ॥
निर्मुच्यमानयोर्मध्ये तयोर्मण्डलयोस्तु वै ।
स तदा ह्याहुतेः कालो दर्शस्य च वषट्क्रियाः ।
एतदृतुमुखं ज्ञेयममावास्यास्तु पार्वणम् ॥ ४७ ॥
दिवा पर्व त्वमावास्यां क्षीणेन्दौ धवले तु वै ।
तस्माद्दिवा त्वमावास्यां गृह्यते यो दिवाकरः ॥ ४८ ॥
कुहेति कोकिलेनोक्तं यस्मात् कालात् समाप्यते ।
तत्कालसंज्ञिता ह्येषा अमावास्या कुहूः स्मृता ॥ ४९ ॥
सिनीवालीप्रमाणन्तु क्षीणशेषो निशाकरः ।

अमावास्या विशत्यर्कं सिनीवाली तदा स्मृता ॥५०॥
अनुमतिश्च राका च सिनीवाली कुहूस्तथा ।
एतासां द्विलवः कालः कुहूमात्रा कुहूः स्मृता ॥५१॥
इत्येष पर्वसन्धीनां कालो वै द्विलवः स्मृतः ।
पर्वणान्तुल्यकालस्तु तुल्याहुतिवषट्क्रियाः ॥ ५२ ॥
चन्द्रसूर्य्यव्यतीपाते समे वै पूर्णिमे उभे ।
प्रतिपत्प्रतिपन्नस्तु पर्वकालो द्विमात्रकः ॥ ५३ ॥
कालः कुहूसिनीवाल्योः समुद्रोद्विलवः स्मृतः ।
अर्कनिर्मण्डले सोमे पर्वकालः कलाः स्मृताः ॥ ५४ ॥
यस्मादापूर्यते सोमः पञ्चदश्यान्तु पूर्णिमा ।
दशभिः पञ्चभिश्चैव कलाभिर्दिवसक्रमात् ॥ ५५ ॥
तस्मात् पञ्चदशे सोमे कला वै नास्ति षोडशी ।
तस्मात् सोमस्य विप्रोक्तः पञ्चदश्यां मया क्षयः ॥५६॥
इत्येते पितरो देवाः सोमपाः सोमवर्द्धनाः ।
आर्त्तवा ऋतवोऽथाब्दा देवास्तान् भवयन्ति हि ॥५७
अतः परं प्रवक्ष्यामि पितॄन् श्राद्धभुजश्च ये ।
तेषां गतिश्च सत्तत्त्वं प्राप्तिं श्राद्धस्य चैव हि ॥ ५८ ॥
न मृतानाङ्गतिः शक्या ज्ञातुं वा पुनरागतिः ।
तपसा हि प्रसिद्धेन किं पुनर्मांसचक्षुषा ॥ ५९ ॥
अत्र देवान् पितॄंश्चैते पितरो लौकिकाः स्मृताः ।
तेषान्ते धर्म्मसामर्थ्यात् स्मृताः सायुज्यगा द्विजैः ॥६०॥
यदि वाश्रमधर्म्मेण प्रज्ञानेषु व्यवस्थितान् ।
अन्ते चात्र प्रसीदन्ति श्राद्धयुक्तेषु कर्म्मसु ॥ ६१ ॥
ब्रह्मचर्य्येण तपसा यज्ञेन प्रजया श्रुधि ।

श्राद्धेन विद्यया चैव चान्नदानेन सप्तधा ॥ ६२ ॥
कर्म्मस्वेतेषु ये सक्तावर्त्तन्त्या देहपातनात् ।
देवैस्ते पितृभिः सार्द्धं मूष्मपैः सोमपैस्तथा ।
स्वर्गता दिवि मोदन्ते पितृमन्त उपासते ॥ ६३ ॥
प्रजायतां प्रसिद्धैषा उक्ता श्राद्धकृतास्च वै ।
तेषां निवापे दत्तं हि तत् कुलीनैस्तु बान्धवैः ॥ ६४ ॥
मासश्राद्धं हि भुञ्जानास्तेऽपि ये ते सोमलौकिकाः ।
एते मनुष्याः पितरो मासश्राद्धभुजस्तु वै ॥ ६५ ॥
तेभ्योऽपरे तु येऽन्ये सङ्कीर्णाः कर्म्मयोनिषु ।
भ्रष्टाश्चाश्रमधर्म्मेषु स्वधास्वाहाविवर्जिताः ॥ ६६ ॥
भिन्ने देहे दुरापन्नाः प्रेतभूता यमक्षये ।
स्वकर्माण्यनुशोचन्तो यातनास्थानमागताः ॥ ६७ ॥
दीर्घाश्चैवातिशुष्काश्च श्मश्रुलाश्च विवाससः ।
क्षुत्पिपासाभिभूतास्ते विद्रवन्ति त्वितस्ततः ॥ ६८ ॥
सरित्सरस्तडागानि पुष्करिण्यश्च सर्वशः ।
परान्नान्यभिकाङ्क्षन्तः काल्यमाना इतस्ततः ॥ ६९ ॥
स्थानेषु पात्यमाना ये यातनास्थेषु तेषु वै ।
शाल्मल्यां वैतरिण्याञ्च कुम्भीपाकेऽथवालुके ॥ ७० ॥
असिपत्रवने चैव यात्यमानाः स्वकर्मभिः ।
तत्र स्थानान्तु तेषां वै दुःखिता नाम शायिनाम् ॥ ७१ ॥
तेषां लोकान्तरस्थानां बान्धवैर्नामगोत्रतः ।
भूमावसव्यं दर्भेषु दत्ताः पिण्डास्त्रयस्तु वै ।
प्राप्तांस्तु तर्पयन्त्येव प्रेतस्थानेष्वधिष्ठितान् ॥ ७२ ॥
अप्राप्ता यातनास्थानं प्रभ्रष्टा ये च पञ्चधा ।

पश्चाद्ये स्थावरान्ते वै भूतानीके स्वकर्मभिः ॥ ७३ ॥
नानारूपासु जातीनां तिर्य्यग्योनिषु मूर्त्तिषु ।
यदाहारा भवन्त्येते तासु तास्विह योनिषु ॥ ७४ ॥
तस्मिंस्तस्मिंस्तदाहारे श्राद्धं दत्तन्तु प्रीणयेत् ।
काले न्यायागतम्पात्रे विधिना प्रतिपादितम् ।
प्राप्नुवन्त्यन्नमादत्तं यत्र यत्रावतिष्ठति ॥ ७५ ॥
यथा गोषु प्रनष्टासु वत्सो विन्दति मातरम् ।
तथा श्राद्धेषु दृष्टान्तो मन्त्रः प्रापयते तु तम् ॥ ७६॥
एवं ह्यविकलं श्राद्धं श्रद्धादत्तं मनुरब्रवीत् ।
सनत्कुमारः प्रोवाच पश्यन् दिव्येन चक्षुषा ॥ ७७॥
गतागतज्ञः प्रेतानां प्राप्तिं श्राद्धस्य चैव हि ।
कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्व्वरी ॥ ७८ ॥
इत्येते पितरो देवा देवाश्च पितरश्च वै ।
अन्योन्यपितरो ह्येते देवाश्च पितरो दिवि ॥ ७९ ॥
एते तु पितरो देवा मनुष्याः पितरश्च ये ।
पिता पितामहश्चैव तथैव प्रपितामहः ॥ ८० ॥
इत्येष विषयः प्रोक्तः पितॄणां सोमपायिनाम् ।
एतत् पितृमहत्त्वं हि पुराणे निश्चयं गतम् ॥ ८१ ॥
इत्येष सोमसूर्य्याभ्यामैलस्य च समागमः ।
अवाप्तिं श्रद्धया चैव पितॄणाञ्चैव तर्पणम् ॥ ८२ ॥
पर्व्वणाञ्चैव यः कालो यातनास्थानमेव च ।
समासात् कीर्त्तितन्तुभ्यं सर्ग एष सनातनः ॥ ८३॥
वैरूप्यं येन तत्सर्व्वं कथितन्त्वेकदेशिकम् ।
अशक्यं परिसंख्यातुं श्रद्धेयं भूतिमिच्छता ॥ ८४ ॥

स्वायम्भुवस्य देवस्य एष सर्गो मयेरितः ।
विस्तरेणानुपूर्व्याच्च भूयः किं कथयामि वः ॥ ८५ ॥

---

एकचत्वारिंशदधिकशततमोऽध्यायः ।

ऋषय ऊचुः । चतुर्युगानि यानि स्युः पूर्वं स्वायम्भुवेऽन्तरे ।
एषां निसर्गं संख्याञ्च श्रोतुमिच्छाम विस्तरात् ॥ १ ॥
सूत उवाच । पृथिवी द्युप्रसङ्गेन मया तु प्रागुदाहृतम् ।
एतच्चतुर्युगं त्वेवं तद्वक्ष्यामि निबोधत ।
तत्प्रमाणं प्रसंख्याय विस्तराच्चैव कृत्स्नशः ॥ २ ॥
लौकिकेन प्रमाणेन निष्पाद्याब्दन्तु मानुषम् ।
तेनापीह प्रसंख्याय वक्ष्यामि तु चतुर्युगम् ॥ ३ ॥
काष्ठानि मेषा दशपञ्च चैव त्रिंशच्च काष्ठाङ्गणयेत् कलान्तु ।
त्रिंशत्कलाश्चैव भवेन्मुहूर्तस्तैस्त्रिंशता रात्र्यहनी समेते॥४॥
अहोरात्रे विभजते सूर्यो मानुषलौकिके ।
रात्रिः स्वप्नाय भूतानाञ्चेष्टायै कर्म्मणामहः ॥ ५ ॥
पित्र्ये रात्र्यहनी मासः प्रविभागस्तयोः पुनः ।
कृष्णपक्षस्त्वहस्तेषां शुक्लः स्वप्नाय शर्वरी ॥ ६ ॥
त्रिंशद्ये मानुषा मासाः पैत्रो मासः स उच्यते ।
शतानि त्रीणि मासानां षष्ठ्या चाभ्यधिकानि तु ।
पैत्रः संवत्सरो ह्येष मानुषेण विभाव्यते ॥ ७ ॥
मानुषेणैव मानेन वर्षाणां यच्छतं भवेत् ।
पितृणां तानि वर्षाणि संख्या तानि तु त्रीणि वै ।
दशच ह्यधिका मासाः पितृसंख्येह कीर्तिता ॥ ८ ॥
लौकिकेन प्रमाणेन अब्दो यो मानुषः स्मृतः ।

एतद्दिव्यमहोरात्रमित्येषा वैदिकी श्रुतिः ॥ ९ ॥
दिव्ये रात्र्यहनी वर्षं प्रविभागस्तयोः पुनः।
अहस्तु यदुदक् चैव रात्रिर्या दक्षिणायनम्।
एते रात्र्यहनी दिव्ये प्रसंख्याते तयोः पुनः ॥१०॥
त्रिंशद्यानि तु वर्षाणि दिव्यो मासस्तु स स्मृतः।
मानुषाणां शतं यच्च दिव्या मासास्त्रयस्तु वै।
तथैव सह संख्यातो दिव्य एष विधिः स्मृतः ॥ ११॥
त्रीणि वर्षशतान्येव षष्टिर्वर्षास्तथैव च।
दिव्यः सम्वत्सरो ह्येष मानुषेण प्रकीर्तितः ॥ १२ ॥
त्रीणि वर्षसहस्राणि मानुषेण प्रमाणतः।
त्रिंशदन्यानि वर्षाणि स्मृतः सप्तर्षिवत्सरः ॥ १३ ॥
नव यानि सहस्राणि वर्षाणां मानुषाणि च।
वर्षाणि नवतिश्चैव ध्रुवसम्वत्सरः स्मृतः ॥ १४ ॥
षट्त्रिंशत्तु सहस्राणि वर्षाणां मानुषाणि च।
षष्टिश्चैव सहस्राणि संख्यातानि तु संख्यया।
दिव्यं वर्षसहस्रन्तु प्राहुः संख्याविदो जनाः ॥१५॥
इत्येतदृषिभिर्गीतं दिव्यया संख्यया द्विजाः।
दिव्येनैव प्रमाणेन युगसंख्या प्रकल्पिता ॥ १६ ॥
चत्वारि भारते वर्षे युगानि ऋषयोऽब्रुवन्।
कृतन्त्रेता द्वापरञ्च कलिश्चैवं चतुर्युगम् ॥ १७ ॥
पूर्वं कृतयुगं नाम ततस्त्रेताभिधीयते।
द्वापरञ्च कलिश्चैव युगानि परिकल्पयेत् ॥ १८ ॥
चत्वार्याहुः सहस्राणि वर्षाणां तत् कृतं युगम्।
तस्य तावच्छती सन्ध्या सन्ध्यांशश्च तथाविधः ॥१९॥

इतरेषु ससन्ध्येषु ससन्ध्यांशेषु च त्रिषु ।
एकपादे निवर्तन्ते सहस्राणि शतानि च ॥ २० ॥
त्रेता त्रीणि सहस्राणि युगसंख्याविदोविदुः ।
तस्यापि त्रिशती सन्ध्या सन्ध्यांशः सन्ध्यया समः ॥ २१ ॥
द्वे सहस्रे द्वापरन्तु सन्ध्यांशौ तु चतुःशतम् ।
सहस्रमेकं वर्षाणां कलिरेव प्रकीर्तितः ।
द्वे शते च तथान्ये च सन्ध्यासन्ध्यांशयोः स्मृते ॥ २२ ॥
एषा द्वादशसाहस्री युगसंख्या तु संज्ञिता ।
कृतन्त्रेता द्वापरञ्च कलिश्चेति चतुष्टयम् ॥ २३ ॥
तत्र संम्वत्सराः सृष्टा मानुषास्तान्निबोधत ।
नियुतानि दश द्वे च पञ्च चैवात्र संख्यया ।
अष्टाविंशत्सहस्राणि कृतं युगमथोच्यते ॥ २४ ॥
प्रयुतन्तु तथा पूर्णं द्वे चान्ये नियुते पुनः ।
षण्णवतिसहस्राणि संख्या तानि च संख्यया ॥ २५ ॥
त्रेतायुगस्य संख्येषा मानुषेण तु संज्ञिता ।
अष्टौ शतसहस्राणि वर्षाणां मानुषाणि तु ।
चतुःषष्टिसहस्राणि वर्षाणां द्वापरं युगम् ॥ २६ ॥
चत्वारि नियुतानि स्युर्वर्षाणि तु कलियुगम् ।
द्वात्रिंशच्च तथान्यानि सहस्राणि तु संख्यया ।
एतत्कलियुगं प्रोक्तं मानुषेण प्रमाणतः ॥ २७ ॥
एषा चतुर्युगावस्था मानुषेण प्रकीर्तिता ।
चतुर्युगस्य संख्याता सन्ध्या सन्ध्यांशकैः सह ॥ २८ ॥
एषा चतुर्युगाख्या तु साधिका ह्येकसप्ततिः ।
कृतत्रेतादियुक्ता सा मनोरन्तरमुच्यते ॥ २९ ॥

मन्वन्तरस्य संख्या तु मानुषेण निबोधत ।
एकत्रिंशत्तथा कोट्यः संख्याताः संख्यया द्विजैः ॥२०॥
तथा शतसहस्राणि दश चान्यानि भागशः ।
सहस्राणि तु द्वात्रिंशच्छतान्यष्टाधिकानि च ॥ २१॥
अशीतिश्चैव वर्षाणि मासाश्चैवाधिकास्तु षट् ।
मन्वन्तरस्य संख्यैषा मानुषेण प्रकीर्तिता ॥ २२ ॥
दिव्येन च प्रमाणेन प्रवक्ष्याम्यन्तरं मनोः ।
सहस्राणां शतान्याहुः सच वै परिसंख्यया ॥ २३ ॥
चत्वारिंशत् सहस्राणि मनोरन्तरमुच्यते ।
मन्वन्तरस्य कालस्तु युगैः सह प्रकीर्तितः ॥ २४ ॥
एषा चतुर्युगाख्या तु साधिका ह्येकसप्ततिः ।
क्रमेण परिवृत्ता सा मनोरन्तरमुच्यते ॥ २५ ॥
एतच्चतुर्दशगुणं कल्पमाहुस्तु तद्विदः ।
ततस्तु प्रलयः कृत्स्नः स तु संप्रलयो महान् ॥२६॥
कल्पप्रमाणो द्विगुणो यथा भवति संख्यया ।
चतुर्युगाख्या व्याख्याता कृतं त्रेतायुगञ्च वै ॥ २७॥
त्रेतासृष्टिं प्रवक्ष्यामि द्वापरं कलिमेव च ।
युगपत्समवेतौ द्वौ द्विधा वक्तुं न शक्यते ॥ २८ ॥
क्रमागतं मयाप्येतत्तुभ्यं नोक्तं युगद्वयम् ।
ऋषिवंशप्रसङ्गेन व्याकुलत्वात्तथा क्रमात् ॥ २९ ॥
नोक्तं त्रेतायुगे शेषं तद्वक्ष्यामि निबोधत ।
अथ त्रेतायुगस्यादौ मनुः सप्तर्षयश्च ये ।
श्रौतस्मार्तं ब्रुवन्धर्मं ब्रह्मणा तु प्रचोदिताः ॥ ४० ॥
दाराग्निहोत्रसम्बन्धं ऋग्यजुःसामसंहिताः ।

इत्यादिबहुलं श्रौतं धर्मं सप्तर्षयोऽब्रुवन् ॥ ४१ ॥
परम्परागतं धर्मं स्मार्तन्त्वाचारलक्षणम् ।
वर्णाश्रमाचारयुक्तं मनुः स्वायम्भुवोऽब्रवीत् ॥ ४२ ॥
सत्येन ब्रह्मचर्य्येण श्रुतेन तपसा तथा ।
तेषां सुतप्ततपसा मार्गेणानुक्रमेण ह ॥ ४३ ॥
सप्तर्षीणां मनोश्चैव आदौ त्रेतायुगे ततः ।
अबुद्धिपूर्वकं तेन सक्कत् पूर्वकमेव च ॥ ४४ ॥
अभिव्रत्तास्तु ते मन्त्रा दर्शनैस्तारकादिभिः ।
आदिकल्पे तु देवानां प्रादुर्भूतास्तु ते स्वयम् ॥ ४५ ॥
प्रमाणेष्वथ सिद्धानामन्येषाञ्च प्रवर्त्तते ।
मन्त्रयोगो व्यतीतेषु कल्पेष्वथ सहस्रशः ।
ते मन्त्रा वै पुनस्तेषां प्रति मायामुपस्थिताः ॥ ४६ ॥
ऋचो यजूंषि सामानि मन्त्राश्चाथर्वणास्तु ये ।
सप्तर्षिभिश्च ये प्रोक्ताः स्मार्त्तन्तु मनुरब्रवीत् ॥ ४७ ॥
त्रेतादौ संहता वेदाः केवलं धर्म्मसेतवः ।
संरोधादायुषश्चैव व्यस्यन्ते द्वापरे च ते ।
ऋषयस्तपसा वेदानहोरात्रमधीयत ॥ ४८ ॥
अनादिनिधना दिव्याः पूर्वं प्रोक्ताः स्वयम्भुवा ।
स्वधर्म्मसंवृताः साङ्गा यथा धर्मं युगे युगे ।
विक्रियन्ते स्वधर्म्मन्तु वेदवादाद्यथायुगम् ॥ ४९ ॥
आरम्भयज्ञः क्षत्रस्य हविर्यज्ञा विशः स्मृताः ।
परिचारयज्ञाः शूद्राश्च जपयज्ञाश्च ब्राह्मणाः ॥ ५० ॥
ततः समुदिता वर्णा त्रेतायां धर्म्मशालिनः ।
क्रियावन्तः प्रजावन्तः समृद्धाः सुखिनश्च वै ॥ ५१ ॥

ब्राह्मणैश्च विधीयन्ते क्षत्रियाः क्षत्रियैर्विशः।
वैश्यान् शूद्रान् वर्तन्ते शूद्रान् परमनुग्रहात्॥ ५२॥
शुभाः प्रकृतयस्तेषां धर्मा वर्णाश्रमाश्रयाः।
सङ्कल्पितेन मनसा वाचा वा हस्तकर्म्मणा।
त्रेतायुगे ह्यविकले कर्मारम्भः प्रसिध्यति॥ ५३॥
आयूरूपं बलं मेधा आरोग्यं धर्म्मशीलता।
सर्वसाधारणं ह्येत दासीत्त्रेतायुगे तु वै॥ ५४॥
वर्णाश्रम व्यवस्थान मेषां ब्रह्मा तथा करोत्।
संहिताश्च तथा मन्त्रा आरोग्यं धर्म्मशीलता॥ ५५॥
संहिताश्च तथा मन्त्रा ऋषिभिर्ब्रह्मणः सुतैः।
यज्ञः प्रवर्तितश्चैव तदा ह्येव तु दैवतैः॥ ५६॥
यामैः शुक्लैर्जयैश्चैव सर्वसाधनसंभृतैः।
विश्वसृड्भिस्तथा सार्द्धं देवेन्द्रेण महौजसा।
स्वायम्भुवेन्तरे देवैस्ते यज्ञाः प्राक् प्रवर्तिताः॥ ५७॥
सत्यं जपस्तपोदानं पूर्वं धर्मोय उच्यते।
यदा धर्म्मस्य ह्रसते शाखा धर्म्मस्य वर्द्धते॥ ५८॥
जायन्ते च तदा शूरा आयुष्मन्तो महाबलाः।
न्यस्तदण्डा महायोगा यज्वानो ब्रह्मवादिनः॥ ५९॥
पद्मपत्रायताक्षाश्च पृथुवक्षाः सुसंहताः।
सिंहोरस्का महासत्वा मत्तमातङ्ग गामिनः॥ ६०॥
महाधनुर्द्धराश्चैव त्रेतायां चक्रवर्त्तिनः।
सर्वलक्षण पूर्णास्ते न्यग्रोध परिमण्डलाः॥ ६१॥
न्यग्रोधौ तु स्मृतौ बाहू व्यामोन्यग्रोध उच्यते।
व्यामेन तूच्छ्रयो यस्य अत ऊर्द्ध्वन्तु देहिनः।

समुच्छ्रयो परीणाहो न्यग्रोध परिमण्डलः ॥ ६२ ॥
चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
प्रोक्तानि सप्तरत्नानि पूर्वं स्वायम्भुवेऽन्तरे ॥ ६३ ॥
विष्णोरंशेन जायन्ते पृथिव्यां चक्रवर्तिनः ।
मन्वन्तरेषु सर्वेषु ह्यतीता नागतेषु वै ॥ ६४ ॥
भूतभव्यानि यानीह वर्त्तमानानि यानि च ।
त्रेतायुगानि तेष्वत्र जायन्ते चक्रवर्तिनः ॥ ६५ ॥
भद्राण्यमानि तेषाञ्च विभाव्यन्ते महीक्षिताम् ।
अत्यद्भुतानि चत्वारि बलं धर्मं सुखं धनम् ॥६६॥
अन्योन्यस्याविरोधेन प्राप्यन्ते नृपतेः समम् ।
अर्थोधर्म्मश्च कामश्च यशोविजय एव च ॥ ६७ ॥
ऐश्वर्य्येणाणिमाद्येन प्रभुशक्ति बलान्विताः ।
श्रुतेन तपसा चैव ऋषींस्तेऽभिभवन्ति हि ॥ ६८ ॥
बलेनाभि भवन्त्येते तेन दानवमानवान् ।
लक्षणैश्चैव जायन्ते शरीरस्थैरमानुषैः ॥ ६९ ॥
केशास्थिता ललाटेन जिह्वा च परिमार्जनी ।
श्यामप्रभाश्चतुर्दंष्ट्राः सुवंशाश्चोर्ध्व रेतसः ॥ ७० ॥
आजानु बाहवश्चैव तालहस्तौ वृषाकृती ।
परिणाहप्रमाणाभ्यां सिंहस्कन्धाश्च मेधिनः ॥ ७१ ॥
पादयोश्चक्र मत्स्यौ तु शङ्खपद्मे च हस्तयोः ।
पञ्चाशीतिसहस्राणि जीवन्तिह्यजरामयाः ॥ ७२ ॥
असङ्गा गतयस्तेषां चतस्रश्चक्रवर्तिनाम् ।
अन्तरिक्षे समुद्रेषु पाताले पर्वतेषु च ॥ ७३ ॥
इज्यादानन्तपः सत्यन्त्रेताधर्मास्तु वै स्मृताः ।

तदा प्रवर्त्तते धर्मो वर्णाश्रमविभागशः ।
मर्यादास्थापनार्थञ्च दण्डनीतिः प्रवर्त्तते ॥ ७४ ॥
हृष्टपुष्टा जनाः सर्वे अरोगाः पूर्णमानसाः ।
एको वेदश्चतुष्पादस्त्रेतायान्तु विधिः स्मृतः ।
त्रीणि वर्षसहस्राणि जीवन्ते तत्र ताः प्रजाः ॥ ७५ ॥
पुत्रपौत्रसमाकीर्णा म्रियन्ते च क्रमेण ताः ।
एष त्रेतायुगे भावस्त्रेतासंध्यां निबोधत ॥ ७६ ॥
त्रेतायुगस्वभावेन सन्ध्यापादेन वर्त्तते ।
सन्ध्यापादः स्वभावाच्च योऽंशः पादेन तिष्ठति ॥ ७७॥

---

द्विचत्वारिंशदधिकशततमोऽध्यायः ।

ऋषय ऊचुः । कथं त्रेतायुगमुखे यज्ञस्यासीत् प्रवर्तनम् ।
पूर्वे स्वायम्भुवे सर्गे यथावत् प्रब्रवीहि नः ॥ १ ॥
अन्तर्हितायां सन्ध्यायां सार्द्धं कृतयुगेन हि ।
कालाख्यायां प्रवृत्तायां प्राप्ते त्रेतायुगे तथा ॥ २ ॥
औषधीषु च जातासु प्रवृत्ते वृष्टिसर्जने ।
प्रतिष्ठितायां वार्त्तायां ग्रामेषु च पुरेषु च ॥ ३ ॥
वर्णाश्रमप्रतिष्ठानं कृत्वा मन्त्रैश्च तैः पुनः ।
संहितास्तु सुसंहृत्य कथं यज्ञः प्रवर्त्तितः ।
एतच्छ्रुत्वाब्रवीत् सूतः श्रूयतां तत् प्रचोदितम् ॥४॥
सूत उवाच । मन्त्रान्वै योजयित्वा तु इहामुत्र च कर्म्मसु ।
तथा विश्वभुगिन्द्रस्तु यज्ञं प्रावर्त्तयत् प्रभुः ॥ ५ ॥
दैवतैः सह संहृत्य सर्वसाधनसंवृतः ।

तस्याश्वमेधे वितते समाजग्मुर्महर्षयः ॥ ६ ॥
यज्ञकर्मण्यवर्तन्त कर्मण्यग्रे तथर्त्विजः ।
हूयमाने देवहोत्रे अग्नौ बहुविधं हविः ॥ ७ ॥
सम्प्रतीतेषु देवेषु सामगेषु च सुस्वरम् ।
परिक्रान्तेषु लघुषु अध्वर्युपुरुषेषु च ॥ ८ ॥
आलब्धेषु च मध्ये तु तथा पशुगणेषु वै ।
आहूतेषु च देवेषु यज्ञभुक्षु ततस्तदा ॥ ९ ॥
य इन्द्रियात्मका देवा यज्ञभागभुजस्तु ते ।
तान्यजन्ति तदा देवाः कल्पादिषु भवन्ति ये ॥ १० ॥
अध्वर्युप्रैषकाले तु व्युत्थिता ऋषयस्तथा ।
महर्षयश्च तान् दृष्ट्वा दीनान् पशुगणांस्तदा ।
विश्वभुजन्तेत्वपृच्छन् कथं यज्ञविधिस्तव ॥ ११ ॥
अधर्मो बलवानेष हिंसा धर्मेप्सया तव ।
नवः पशुविधिस्त्विष्टस्तव यज्ञे सुरोत्तम ! ॥ १२ ॥
अधर्मो धर्मघाताय प्रारब्धः पशुभिस्त्वया ।
नायंधर्मोह्यधर्मोऽयं न हिंसा धर्म उच्यते ।
आगमेन भवान् धर्मं प्रकरोतु यदीच्छति ॥ १३ ॥
विधिदृष्टेन यज्ञेन धर्मेणा व्यसनेन तु ।
यज्ञबीजैः सुरश्रेष्ठ ! त्रिवर्गपरिमोषितैः ॥ १४ ॥
एष यज्ञो महानिन्द्रः स्वयम्भुविहितः पुरा ।
एवं विश्वभुगिन्द्रस्तु ऋषिभिस्तत्त्वदर्शिभिः ।
उक्तो न प्रति जग्राह मान मोह समन्वितः ॥ १५ ॥
तेषां विवादः सुमहान् जज्ञे इन्द्रमहर्षिणाम् ।
जङ्गमैः स्थावरैः केन यष्टव्यमिति चोच्यते ॥ १६ ॥

ते तु खिन्ना विवादेन शक्त्या युक्ता महर्षयः।
सन्धाय सममिन्द्रेण पप्रच्छुः खचरं वसुम् ॥ १७ ॥
ऋषय ऊचुः। महाप्राज्ञ! त्वया दृष्टः कथं यज्ञविधिर्नृप!।
औत्तानपादे प्रब्रूहि संशयं नस्तुद प्रभो! ॥ १८ ॥
सूत उवाच। श्रुत्वा वाक्यं वसुस्तेषामविचार्य बलाबलम्।
वेदशास्त्रं मनु स्मृत्य यज्ञतत्त्वमुवाच ह ॥ १९ ॥
यथोपनीतैर्यष्टव्यमिति होवाच पार्थिवः।
यष्टव्यं पशुभिर्मेध्यैरथ मूलफलैरपि ॥ २० ॥
हिंसास्वभावो यज्ञस्य इति मे दर्शनागमः।
तथैते भाविता मन्त्रा हिंसालिङ्गा महर्षिभिः ॥२१॥
दीर्घेण तपसा युक्तैस्तारकादिनिदर्शिभिः।
तत्प्रमाणं मया प्रोक्तं तस्माच्छमितुमर्हथ ॥ २२ ॥
यदि प्रमाणं स्वान्येव मन्त्रवाक्यानि वो द्विजाः!।
तथा प्रवर्त्ततां यज्ञो ह्यन्यथा मा नृतं वचः ॥ २३ ॥
एवं कृतोत्तरास्ते तु युञ्ज्यात्मानं ततोधिया।
अवश्यम्भाविनं दृष्ट्वा तमधो ह्यशपंस्तदा ॥ २४ ॥
इत्युक्तमात्रो नृपतिः प्रविवेश रसातलम्।
ऊर्द्ध्वचारी नृपो भूत्वा रसातलचरोऽभवत् ॥ २५ ॥
वसुधातलचारी तु तेन वाक्येन सोऽभवत्।
धर्माणां संशयच्छेत्ता राजा वसुधरोगतः ॥ २६ ॥
तस्मान्नवाचशो ह्येकेन बहुज्ञेनापि संशयः।
बहुधारस्य धर्म्मस्य सूक्ष्मा दुरनुगा गतिः ॥ २७ ॥
तस्मान्न निश्चयाद्वक्तुं धर्म्मः शक्यो हि केनचित्।
देवानृषीनुपादाय स्वायम्भुव मृते मनुम् ॥ २८ ॥

तस्मान्न हिंसा यज्ञे स्याद्यदुक्तमृषिभिः पुरा ।
ऋषिकोटिसहस्राणि स्वैस्तपोभिर्दिवङ्गताः ॥ २९ ॥
तस्मान्न हिंसा यज्ञञ्च प्रशंसन्ति महर्षयः ।
उञ्छो मूलं फलं शाकमुदपात्रं तपोधनाः ॥ ३० ॥
एतद्दत्त्वा विभवतः स्वर्गलोके प्रतिष्ठिताः ।
अद्रोहश्चाप्यलोभश्च दमोभूतदया शमः ॥ ३१ ॥
ब्रह्मचर्य्यं तपः शौच मनुक्रोशं क्षमा धृतिः ।
सनातनस्य धर्म्मस्य मूलमेव दुरासदम् ॥ ३२ ॥
द्रव्यमन्त्रात्मको यज्ञस्तपश्च समतात्मकम् ।
यज्ञैश्च देवानाप्नोति वैराजं तपसा पुनः ॥ ३३ ॥
ब्रह्मणः कर्म्मसंन्यासाद् वैराग्यात्प्रकृतेर्लयम् ।
ज्ञानात् प्राप्नोति कैवल्यं पञ्चैता गतयः स्मृताः ॥ ३४ ॥
एवं विवादः सुमहान् यज्ञस्यासीत् प्रवर्त्तने ।
ऋषीणां देवतानाञ्च पूर्व्वं स्वायम्भुवेऽन्तरे ॥ ३५ ॥
ततस्ते ऋषयो दृष्ट्वा हृतं धर्मं बलेन ते ।
वसोर्वाक्यमनादृत्य जग्मुस्ते वै यथागतम् ॥ ३६ ॥
गतेषु ऋषिसङ्घेषु देवा यज्ञमवाप्नुयुः ।
श्रूयन्ते हि तपःसिद्धा ब्रह्मक्षत्रादयो नृपाः ॥ ३७ ॥
प्रियव्रतोत्तानपादौ ध्रुवो मेधातिथिर्वसुः ।
सुधामा विरजाश्चैव शङ्खपाद्राजसस्तथा ॥ ३८ ॥
प्राचीनबर्हिः पर्ज्जन्यो हविर्धानादयो नृपाः ।
एते चान्ये च बहवस्ते तपोभिर्दिवङ्गताः ॥ ३९ ॥
राजर्षयो महात्मानो येषां कीर्त्तिः प्रतिष्ठिता ।
तस्माद्विशिष्यते यज्ञात्तपः सर्व्वैस्तु कारणैः ॥ ४० ॥

ब्रह्मणा तपसा सृष्टं जगद्विश्वमिदं पुरा।
तस्मान्नाप्नोति तद्यज्ञात्तपो मूलमिदं स्मृतम्॥ ४१॥
यज्ञप्रवर्तनं ह्येव मासीत् स्वायम्भुवेऽन्तरे।
तदा प्रभृति यज्ञोऽयं युगैः सार्द्धं प्रवर्तितः॥ ४२॥
इति श्रीमत्स्यपुराणे मन्वन्तरानुकल्पे देवर्षिसंवादे
द्विचत्वारिंशदुत्तरशततमोऽध्यायः।

---

अथ त्रिचत्वारिंशदधिकशततमोऽध्यायः।

सूत उवाच। अत ऊर्द्धं प्रवक्ष्यामि द्वापरस्य विधिं पुनः।
तत्र त्रेतायुगे क्षीणे द्वापरं प्रतिपद्यते॥ १॥
द्वापरादौ प्रजानान्तु सिद्धिस्त्रेतायुगे तु या।
परिवृत्ते युगे तस्मिंस्ततः सा वै प्रणश्यति॥ २॥
ततः प्रवर्त्तते तासां प्रजानां द्वापरे पुनः।
लोभोधृतिर्वणिग्युद्धं तत्त्वानामविनिश्चयः॥ ३॥
प्रध्वंसश्चैव वर्णानां कर्मणान्तु विपर्ययः।
याता वधः परोदण्डोमानोदर्पोऽक्षमा बलम्॥ ४॥
तथा रजस्तमोभूयः प्रवृत्ते द्वापरे पुनः।
आद्ये कृतेनाधर्मोऽस्ति स त्रेतायां प्रवर्त्तितः॥ ५॥
द्वापरे व्याकुलो भूत्वा प्रणश्यति कलौ पुनः।
वर्णानां द्वापरे धर्माः सङ्कीर्यन्ते तथाश्रमाः॥ ६॥
द्वैधमुत्पद्यते चैव युगे तस्मिन् श्रुतिस्मृतौ।
द्विधाश्रुतिः स्मृतिश्चैव निश्चयो नाधिगम्यते॥ ७॥
अनिश्चयावगमनाद्धर्मतत्त्वं न विद्यते।
धर्मतत्त्वे ह्यविज्ञाते मतिभेदस्तु जायते॥ ८॥

परस्परं विभिन्नास्ते दृष्टीनां विभ्रमेण तु ।
अतो दृष्टिविभिन्नैस्तैः कृतमत्याकुलन्त्विदम् ॥ ९ ॥
एको वेदश्चतुष्पादः संहृत्य तु पुनः पुनः ।
संक्षेपादायुषश्चैव व्यस्यते द्वापरेष्विह ॥ १० ॥
वेदश्चैकश्चतुर्धा तु व्यस्यते द्वापरादिषु ।
ऋषिपुत्रैः पुनर्वेदा भिद्यन्ते दृष्टिविभ्रमैः ॥ ११ ॥
ते तु ब्राह्मणविन्यासैः स्वरक्रमविपर्ययैः ।
संहृता ऋग्यजुःसाम्नां संहितास्तैर्महर्षिभिः ॥ १२ ॥
सामान्याद्वैकृताच्चैव दृष्टिभिन्नैः क्वचित् क्वचित् ।
ब्राह्मणं कल्पसूत्राणि भाष्यविद्यास्तथैव च ॥ १३ ॥
अन्ये तु प्रस्थितास्तान्वै केचित्तान् प्रत्यवस्थिताः ।
द्वापरेषु प्रवर्तन्ते भिन्नार्थैस्तैः स्वदर्शनैः ॥ १४ ॥
एकमाध्वर्यवं पूर्वमासीद्द्वैधन्तु तत् पुनः ।
सामान्यविपरीतार्थैः कृतं शास्त्राकुलन्त्विदम् ॥ १५ ॥
आध्वर्यवञ्च प्रस्थानैर्बहुधा व्याकुलीकृतम् ।
तथैवाथर्वणां साम्नां विकल्पैः स्वस्य संचयैः ॥ १६ ॥
व्याकुलो द्वापरेष्वर्थः क्रियते भिन्नदर्शनैः ।
द्वापरे सन्निवृत्ते ते वेदा नश्यन्ति वै कलौ ॥ १७ ॥
तेषां विपर्ययोत्पन्ना भवन्ति द्वापरे पुनः ।
अदृष्टिर्मरणं चैव तथैव व्याध्युपद्रवाः ॥ १८ ॥
वाङ्मनःकर्मभिर्दुःखैर्निर्वेदो जायते ततः ।
निर्वेदाज्जायते तेषां दुःखमोक्षविचारणा ॥ १९ ॥
विचारणायां वैराग्यं वैराग्याद्दोषदर्शनम् ।
दोषाणां दर्शनाच्चैव ज्ञानोत्पत्तिस्तु जायते ॥ २० ॥

तेषां मेधाविनां पूर्वं मर्त्त्ये स्वायम्भुवेऽन्तरे।
उत्पत्स्यन्तीह शास्त्राणां द्वापरे परिपन्थिनः ॥ २१ ॥
आयुर्वेदविकल्पाश्च अङ्गानां ज्योतिषस्य च।
अर्थशास्त्रविकल्पाश्च हेतुशास्त्रविकल्पनम् ॥ २२ ॥
प्रक्रिया कल्पसूत्राणां भाष्यविद्याविकल्पनम्।
स्मृतिशास्त्रप्रभेदाश्च प्रस्थानानि पृथक् पृथक् ॥२३॥
द्वापरेष्वभिवर्त्तन्ते मतिभेदास्तथा नृणाम्।
मनसा कर्म्मणा वाचा कृच्छ्राद्वार्त्ता प्रसिध्यति ॥२४॥
द्वापरे सर्वभूतानां कालः क्लेशपरः स्मृतः।
लोभो धृतिर्वणिग्युद्धन्तत्त्वानामविनिश्चयः ॥ २५ ॥
वेदशास्त्रप्रणयनं वर्णानां सङ्करस्तथा।
वर्णाश्रमपरिध्वंसः कामद्वेषौ तथैव च ॥ २६ ॥
पूर्णे वर्षसहस्रे द्वे परमायुस्तदा नृणाम्।
निःशेषे द्वापरे तस्मिंस्तस्य सन्ध्या तु पादतः ॥ २७ ॥
गुणहीनास्तु तिष्ठन्ति धर्म्मस्य द्वापरस्य तु।
तथैव सन्ध्या पादेन अंशस्तस्यां प्रतिष्ठितः ॥ २८ ॥
द्वापरस्य तु पर्य्येषा पुष्यस्य च निबोधत।
द्वापरस्यांशशेषे तु प्रतिपत्तिः कलेरथ ॥ २९ ॥
हिंसास्तेया नृतं माया दम्भश्चैव तपस्विनाम्।
एते स्वभावाः पुष्यस्य साधयन्ति च ताः प्रजाः ॥ ३० ॥
एष धर्म्मः स्मृतः कृत्स्नो धर्म्मश्च परिहीयते।
मनसा कर्म्मणा वाचा वार्त्ताः सिद्ध्यन्ति वानवा॥३१॥
कलिः प्रमारको रोगः सततं चापि क्षुद्भयम्।
अनावृष्टिभयञ्चैव देशानाञ्च विपर्ययः ॥ ३२ ॥

न प्रमाणे स्थितिं ह्यस्ति पुष्ये घोरे युगे कलौ ।
गर्भस्थो म्रियते कश्चिद् यौवनस्थस्तथापरः ॥ ३४ ॥
स्थाविर्ये मध्यकौमारे म्रियन्ते च कलौ प्रजाः ।
अल्पतेजोबलाः पापा महाकोपा ह्यधार्मिकाः ॥ ३५॥
अनृतव्रतलुब्धाश्च पुष्ये चैव प्रजाः स्थिताः ।
दुरिष्टैर्दुरधीतैश्च दुराचारैर्दुरागमैः ॥ ३६ ॥
विप्राणां कर्म्मदोषैस्तैः प्रजानां जायते भयम् ।
हिंसा मानस्तथेर्षा च क्रोधोऽसूयाऽक्षमाऽधृतिः ॥ ३७ ॥
पुष्ये भवन्ति जन्तूनां लोभो मोहश्च सर्वशः ।
सङ्क्षोभो जायतेऽत्यर्थं कलिं मासाद्य वै युगम् ॥३८॥
नाधीयन्ते तथा वेदान्यजन्ते वै द्विजातयः ।
उत्सीदन्ति यथा चैव वैश्यैः सार्द्धन्तु क्षत्रियाः ॥ ३९॥
शूद्राणां मन्त्रयोनिस्तु सम्बन्धो ब्राह्मणैः सह ।
भवतीह कलौ तस्मिन् शयनासनभोजनैः ॥ ४० ॥
राजानः शूद्रभूयिष्ठाः पाषण्डानां प्रवृत्तयः ।
काषायिणश्च निष्कच्छास्तथा कापालिनश्च ह ॥४१॥
ये चान्ये देवव्रतिनस्तथा ये धर्म्मदूषकाः ।
दिव्यवृत्ताश्च ये केचिद् वृत्त्यर्थं श्रुतिलिङ्गिनः ॥४२ ॥
एवम्विधाश्च ये केचिद्भवन्तीह कलौ युगे ।
अधीयते तदा वेदान् शूद्रा धर्मार्थकोविदाः ॥ ४३ ॥
यजन्ति ह्यश्वमेधैस्तु राजानः शूद्रयोनयः ।
स्त्रीबालगोवधं कृत्वा हत्वा चैव परस्परम् ॥ ४४ ॥
उपहृत्य तथान्योन्यं साधयन्ति तदा प्रजाः ।
दुःखप्रचुरताल्पायुर्देशोत्सादः सरोगता ॥ ४५ ॥

अधर्माभिनिवृत्तत्वं तमोवृत्तं कलौ स्मृतम्।
भ्रूणहत्या प्रजानाञ्च तथा ह्येवं प्रवर्त्तते॥ ४६ ॥
तस्मादायुर्बलं रूपं प्रहीयन्ते कलौ युगे।
दुःखेनाभिप्लुतानां च परमायुःशतं नृणाम्॥ ४७ ॥
भूत्वा च न भवन्तीह वेदाः कलियुगेऽखिलाः।
उत्सीदन्ते तथा यज्ञाः केवलं धर्म्महेतवः॥ ४८ ॥
एषा कलियुगावस्था सन्ध्यांशौ तु निबोधत।
युगे युगे तु हीयन्ते त्रींस्त्रीन् पादांश्च सिद्धयः॥४९॥
युगस्वभावाः सन्ध्यासु अवतिष्ठन्ति पादतः।
सन्ध्यास्वभावाः स्वांशेषु पादेनैवावतस्थिरे॥ ५० ॥
एवं सन्ध्यांशके काले सम्प्राप्ते तु युगान्तिके।
तेषामधर्मिणां शास्ता भृगूणाञ्च कुले स्थितः॥ ५१॥
गोत्रेण वै चन्द्रमसे नाम्ना प्रमतिरुच्यते।
कलिसन्ध्यांशभागेषु मनोः स्वायम्भुवेऽन्तरे॥ ५२ ॥
समास्त्रिंशत्तु सम्पूर्णाः पर्यटन्वै वसुन्धराम्।
अस्त्रकर्मा स वै सेनां हस्त्यश्वरथसङ्कुलाम्॥ ५३ ॥
प्रगृहीतायुधैर्विप्रैः शतशोऽथ सहस्रशः।
स तदा तैः परिवृतो म्लेच्छान् सर्वान्निजघ्निवान्॥५४
स हत्वा सर्वशश्चैव राजानः शूद्रयोनयः॥ ५५ ॥
पाषण्डान् स तदा सर्वान्निःशेषानकरोत् प्रभुः॥५५॥
अधार्मिकाश्च ये केचित्तान् सर्वान् हन्ति सर्वशः।
औदीच्यान्मध्यदेशांश्च पार्वतीयांस्तथैव च॥ ५६ ॥
प्राच्यान् प्रतीच्यांश्च तथा विन्ध्यपृष्ठापरान्तिकान्।
तथैव दाक्षिणात्यांश्च द्रविडान् सिंहलैः सह॥५७॥

गन्धारान् पारदांश्चैव पह्लवान्यवनान् शकान् ।
त षारान् बर्बरान् श्वेतान् पुलिन्दान् बर्बरान् खसान् ॥५८॥
लम्पकानान्ध्रकांश्चापि चौरजातीं स्तथैव च ।
प्रवृत्तचक्रो बलवान् शूद्राणा मन्तकृद्वभौ ॥५९॥
विद्रावय सर्वभूतानि चचार वसुधामिमाम् ।
मानवस्य तु वंशे तु नृदेवस्येह जज्ञिवान् ॥ ६० ॥
पूर्वजन्मनि विष्णुश्च प्रमतिर्नाम वीर्यवान् ।
स्वतः स वै चन्द्रमसः पूर्वं कलियुगे प्रभुः ॥ ६१ ॥
द्वात्रिंशेऽभ्युदिते वर्षे प्रक्रान्तो विंशतिं समाः ।
निजघ्ने सर्वभूतानि मानुषाण्येव सर्वशः ॥ ६२ ॥
कृत्वा वीजावशिष्टान्तां पृथ्वीं क्रूरेण कर्म्मणा ।
परस्परनिमित्तेन कालेनाकस्मिकेन च ॥ ६३ ॥
संस्थिता सह सायासै सेना प्रमतिना सह ।
गङ्गायमुनयोर्मध्ये सिद्धिं प्राप्ता समाधिना ॥६४॥
ततस्तेषु प्रनष्टेषु सन्ध्यांशे क्रूरकर्म्मसु ।
उत्साद्य पार्थिवान् सर्वान् तेष्वतीतेषु वै तदा ॥६५ ॥
ततः सन्ध्यांशके काले संप्राप्ते च युगान्तके ।
स्थिताः स्वल्पावशिष्टासु प्रजास्विह क्वचित् क्वचित्॥६६
स्वाप्रदानास्तदा ते वै लोभाविष्टास्तु वृन्दशः ।
उपहिंसन्ति चान्योन्यं प्रलुम्पन्ति परस्परम् ॥ ६७ ॥
अराजके युगांशे तु सङ्क्षये समुपस्थिते ।
प्रजास्ता वै तदा सर्वाः परस्परभयार्द्दिताः ॥ ६८ ॥
व्याकुलास्ताः परावृत्तास्त्यज्य देवगृहाणि तु ।
स्वान् स्वान् प्राणानवेक्षन्तो निष्कारुण्यात् सुदुःखिताः ॥६९

नष्टे श्रौतस्मृते धर्मे कामक्रोधवशानुगाः।
निर्मर्यादा निरानन्दा निःस्नेहानिरपत्रपाः॥ ७०॥
नष्टे धर्मे प्रतिहता ह्रस्वकाः पञ्चविंशकाः।
हित्वा दारांश्च पुत्रांश्च विषादव्याकुलप्रजाः॥७१॥
अनावृष्टिहतास्ते वै वार्त्तामुत्सृज्य दुःखिताः।
चीरकृष्णाजिनधरा निष्कुशा निष्परिग्रहाः॥ ७२॥
वर्णाश्रमपरिभ्रष्टाः सङ्करङ्घोरमाश्रिताः।
एवं कष्ट मनुप्राप्ता ह्यल्पशेषाः प्रजास्ततः॥ ७३॥
जन्तवश्च क्षुधाविष्टा दुःखान्निर्वेदमागमन्।
संश्रयन्ति च देशांस्तांश्चक्रवत् परिवर्त्तनाः॥ ७४॥
ततः प्रजास्तु ताः सर्वा मांसाहारा भवन्ति हि।
मृगान् वराहान् वृषभान्ये चान्ये वनचारिणः॥७५॥
भक्ष्यांश्चैवाप्यभक्ष्यांश्च सर्वांस्तान् भक्षयन्ति ताः।
समुद्रं संश्रिता यास्तु नदींश्चैव प्रजास्तु ताः॥ ७६॥
तेऽपि मत्स्यान् हरन्तीह आहारार्थं च सर्वशः।
अभक्ष्याहारदोषेण एकवर्णगता प्रजाः॥ ७७॥
यथा कृतयुगे पूर्वमेकवर्णमभूत्किल।
तथा कलियुगस्यान्ते शूद्रीभूताः प्रजास्तथा॥ ७८॥
एवं वर्षशतं पूर्णं दिव्यं तेषां न्यवर्त्तत।
षट्त्रिंशच्च सहस्राणि मानुषाणि तु तानि वै॥७९॥
अथ दीर्घेण कालेन पक्षिणः पशवस्तथा।
मत्स्याश्चैव हताः सर्वैः क्षुधाविष्टैश्च सर्वशः॥ ८०॥
निःशेषेष्वथ सर्वेषु मत्स्यपक्षिपशुष्वथ।
सन्ध्यांशे प्रतिपन्ने तु निःशेषास्तु तदा कृताः॥८१॥

ततः प्रजास्तु सम्भूय कन्दमूलमथोऽखनन् ।
फलमूलाशनाः सर्वे अनिकेतास्तथैव च ॥ ८२ ॥
तत्कलान्यथ वासांसि अधःशय्याश्च सर्वशः ।
परिग्रहो न तेष्वस्ति धनशुद्धिमवाप्नुयुः ॥ ८३ ॥
एवं क्षयं गमिष्यन्ति ह्यल्पशिष्टाः प्रजास्तदा ।
तासामल्पावशिष्टानामाहाराद्वृद्धिरिष्यते ॥ ८४ ॥
एवं वर्षशतं दिव्यं सन्ध्यांशस्य वर्त्तते ।
ततो वर्षसहस्रान्ते अल्पशिष्टाः स्त्रियः सुताः ॥ ८५॥
मिथुनानि तु ताः सर्वा ह्यन्योन्यं सम्प्रजज्ञिरे ।
ततस्तास्तु म्रियन्ते वै पूर्वोत्पन्नाः प्रजास्तु याः ॥ ८६ ॥
जातमात्रेष्वपत्येषु ततः कृतमवर्त्तत ।
यथा स्वर्गे शरीराणि नरके चैव देहिनाम् ॥ ८७ ॥
उपभोगसमर्थानि एवं कृतयुगादिषु ।
एवं कृतस्य सन्तानः कलेश्चैव क्षयस्तथा ॥ ८८ ॥
विचारणात्तु निर्वेदः साम्यावस्थात्मना तथा ।
ततश्चैवात्मसम्बोधः सम्बोधाद्धर्मशीलता ॥ ८९ ॥
कलिशिष्टेषु तेष्वेवं जायन्ते पूर्ववत् प्रजाः ।
भाविनोऽर्थस्य च बलात्ततः कृतमवर्त्तत ॥ ९० ॥
अतीतानागतानि स्युर्यानि मन्वन्तरेष्विह ।
एते युगस्वभावास्तु मयोक्तास्तु समासतः ॥ ९१ ॥
विस्तरेणानुपूर्व्याच्च नमस्कृत्य स्वयम्भुवे ।
प्रवृत्ते तु ततस्मिन् पुनः कृतयुगे तु वै ॥ ९२ ॥
उत्पन्नाः कलिशिष्टेषु प्रजाः कार्त्तयुगास्तथा ।
तिष्ठन्ति चेह ये सिद्धा अदृष्टा विहरन्ति च ॥ ९३ ॥

सह सप्तर्षिभिर्ये तु तत्र ये च व्यवस्थिताः ।
ब्रह्मक्षत्रविशः शूद्रा बीजार्थं य इह स्मृताः ॥ ९४ ॥
तेषां सप्तर्षयो धर्मं कथयन्तीह तेषु च ॥ ९५ ॥
वर्णाश्रमाचारयुतं श्रौतस्मार्त्तविधानतः ।
एवं तेषु क्रियावत्सु प्रवर्त्तन्तीह वै कृते ॥ ९६ ॥
श्रौतस्मार्त्तस्थितानान्तु धर्मे सप्तर्षिदर्शिते ।
ते तु धर्मव्यवस्थार्थं तिष्ठन्तीह कृते युगे ॥ ९७ ॥
मन्वन्तराधिकारेषु तिष्ठन्ति ऋषयस्तु ते ।
यथा दावप्रदग्धेषु तृणेष्वेवापरन्तितौ ॥ ९८ ॥
वनानां प्रथमं दृष्टा तेषां मूलेषु सम्भवः ।
एवं युगाद्युगानां वै सन्तानस्तु परस्परम् ॥ ९९ ॥
प्रवर्त्तते ह्यविच्छेदाद्यावन्मन्वन्तरक्षयः ।
सुखमायुर्बलं रूपं धर्मार्थौ काम एव च ॥ १०० ॥
युगेष्वेतानि हीयन्ते त्रयः पादाः क्रमेण तु ।
इत्येष प्रतिसन्धिर्वः कीर्त्तितस्तु मया द्विजाः ! ॥१०१॥
चतुर्युगाणां सर्वेषामेतदेव प्रसाधनम् ।
एषां चतुर्युगाणान्तु गणिता ह्येकसप्ततिः ॥ १०२ ॥
क्रमेण परिवृत्तास्ता मनोरन्तरमुच्यते ।
युगाख्यासु तु सर्वासु भवतीह यदा चयत् ॥१०३॥
तदेव च तदन्यासु पुनस्तद्वै यथाक्रमम् ।
सर्गे सर्गे यथा भेदा ह्युत्पद्यन्ते तथैव च ॥१०४॥
चतुर्दशसु तावन्तो ज्ञेया मन्वन्तरेष्विह ।
आसुरी यातुधानी च पैशाची यक्षराक्षसी ॥१०५॥

युगे युगे तदा काले प्रजा जायन्ति ताः शृणु ।
यथाकल्पं युगैः सार्द्धं भवन्ते तुल्यलक्षणा ।
इत्येतल्लक्षणं प्रोक्तं युगानां वै यथाक्रमम् ॥ १०६ ॥
मन्वन्तराणां परिवर्त्तनानि चिरप्रवृत्तानि युगस्वभावात् ।
क्षणं न संतिष्ठति जीवलोकः क्षयोदयाभ्यां परिवर्त्तमानः॥१०७॥
एते युगस्वभावा वः परिक्रान्ता यथाक्रमम् ।
मन्वन्तराणि यान्यस्मिन् कल्पे वक्ष्यामि तानि च ॥१०८

इति श्रीमत्स्यपुराणे मन्वन्तरानुकीर्त्तनो नाम त्रिचत्वारिंशदधिकशततमोऽध्यायः ॥ १४३ ॥

---

अथ चतुश्चत्वारिंशदधिकशततमोऽध्यायः ।

सूत उवाच । मन्वन्तराणि यानि स्युः कल्पे कल्पे चतुर्दश ।
व्यतीतानागतानि स्युर्यानि मन्वन्तरेष्विह ॥ १ ॥
विस्तरेणानुपूर्व्याच्च स्थितिं वक्ष्ये युगे युगे ।
तस्मिन् युगे च सम्भूतिर्यासां यावच्च जीवितम् ॥ २ ॥
युगमात्रन्तु जीवन्ति न्यूनं तस्माद्द्वयेन च ।
चतुर्दशसु तावन्तो ज्ञेया मन्वन्तरेष्विह ॥ ३ ॥
मनुष्याणां पशूनाञ्च पक्षिणां स्थावरैः सह ।
तेषामायुरुपक्रान्तं युगधर्मेषु सर्वशः ॥ ४ ॥
तथैवायुः परिक्रान्तं युगधर्मेषु सर्वशः ।
अस्थितिञ्च कलौ दृष्ट्वा भूतानां मानुषे तथा ॥ ५ ॥
परमायुः शतन्त्वेतन्मानुषाणां कलौ स्मृतम् ।
देवासुरमनुष्याश्च यक्षगन्धर्वराक्षसाः ॥ ६ ॥
परिणाहोच्छ्रये तुल्या जायन्तेह कृते युगे।

षण्णवत्यङ्गुलोत्सेधो ऽष्टानां देवयोनिनाम् ॥ ७ ॥
नवाङ्गुलप्रमाणेन निष्पन्नेन तथाष्टकम्।
एतत् स्वाभाविकं तेषां प्रमाणमधिकुर्वताम् ॥ ८ ॥
मनुष्या वर्त्तमानास्तु युगसन्ध्यांशकेष्विह।
देवासुरप्रमाणान्तु सप्तसप्ताङ्गुलं क्रमात् ॥ ९ ॥
चतुराशीतिकेयेन कलिजैरङ्गुलैः स्मृतम्।
आपादतलमस्तको नवतालो भवेत्तु यः ॥ १० ॥
संहत्याजानु बाहुश्च दैवतैरभिपूज्यते।
गवाश्व हस्तिनां चैव महिषस्थावरात्मनाम् ॥ ११ ॥
क्रमेणैतेन विज्ञेये ह्रासवृद्धी युगे युगे।
षट्सप्तत्यङ्गुलोत्सेधः पशुराककुदो भवेत् ॥ १२ ॥
अङ्गुलानामष्टशतमुत्सेधो हस्तिनां स्मृतः।
अङ्गुलानां सहस्रन्तु द्विचत्वारिंशदङ्गुलम् ॥ १३ ॥
शतार्द्धमङ्गुलानान्तु ह्युत्सेधः शाखिनाम्परः।
मानुषस्य शरीरस्य सन्निवेशस्तु यादृशः ॥ १४ ॥
तल्लक्षणन्तु देवानां दृश्यतेऽन्वयदर्शनात्।
बुद्ध्यातिशयसंयुक्तो देवानां काय उच्यते ॥ १५ ॥
तथा नातिशयश्चैव मानुषः काय उच्यते।
इत्येव हि परिक्रान्ता भावा ये दिव्यमानुषाः ॥ १६ ॥
पशूनां पक्षिणां चैव स्थावराणां च सर्वशः।
गावोऽजाश्वाश्च विज्ञेया हस्तिनः पक्षिणो मृगाः ॥ १७ ॥
उपयुक्ताः क्रियास्वेते यज्ञियास्त्विह सर्वशः।
यथाक्रमोपभोगाश्च देवानां पशुमूर्त्तयः ॥ १८ ॥
तेषां रूपानुरूपैश्च प्रमाणैः स्थिरजङ्गमाः।

मनोज्ञैस्तत्र तैर्भोगैः सुखिनो ह्युपपेदिरे ॥ १९ ॥
अथ सन्तः प्रवक्ष्यामि साधूनथ ततश्च वै ।
ब्राह्मणाः श्रुतिशब्दाश्च देवानां व्यक्तमूर्त्तयः ॥ २० ॥
संयुज्य ब्रह्मणा ह्यात्मस्तेन सन्तः प्रचक्षते ।
सामान्येषु च धर्मेषु तथा वैशेषिकेषु च ॥ २१ ॥
ब्रह्मक्षत्रविशो युक्ताः श्रौतस्मार्तेन कर्म्मणा ।
वर्णाश्रमेषु युक्तस्य सुखोदर्कस्य स्वर्गतौ ॥ २२ ॥
श्रौतस्मार्तो हि यो धर्मो ज्ञानधर्मः स उच्यते ।
दिव्यानां साधनात् साधुर्ब्रह्मचारी गुरोर्हितः ॥२३॥
कारणात् साधनाच्चैव गृहस्थः साधुरुच्यते ।
तपसश्च तथारण्ये साधुर्वैखानसः स्मृतः ॥ २४ ॥
यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ।
धर्मो धर्मगतिः प्रोक्तः शब्दो ह्येष क्रियात्मकः ॥ २५ ॥
कुशलाकुशलौ चैव धर्माधर्मौ ब्रवीत् प्रभुः ।
अथ देवाश्च पितर ऋषयश्चैव मानुषाः ॥ २६ ॥
अयं धर्मो ह्ययं नेति ब्रुवते मौनमूर्त्तिना ।
धर्मेति धारणे धातुर्महत्त्वे चैव मुच्यते ॥ २७ ॥
आधारणे महत्त्वे वा धर्म्मः स तु निरुच्यते ।
तत्रेष्टप्रापको धर्म्म आचार्य्यैरुपदिश्यते ॥ २८ ॥
अधर्म्मश्चानिष्टफल आचार्य्यैर्नोपदिश्यते ।
वृद्धाश्चालोलुपाश्चैव आत्मवन्तो ह्यदाम्भिकाः ॥ २९ ॥
सम्यग्विनीता मृदवस्तानाचार्यान् प्रचक्षते ।
धर्मज्ञैर्विहितो धर्म्मः श्रौतस्मार्तो द्विजातिभिः ॥ ३० ॥
दाराग्निहोत्रसम्बन्धमिज्या श्रौतस्य लक्षणम् ।

स्मार्त्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ॥२१॥
पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ।
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि वै श्रुतिः ॥२२॥
मन्वन्तरस्यातीतस्य स्मृत्वा तन्मनुरब्रवीत् ।
तस्मात् स्मार्तः स्मृतो धर्म्मो वर्णाश्रमविभागशः ॥२३॥
एवं वै द्विविधो धर्म्मः शिष्टाचारः स उच्यते ।
शिषेर्धातोश्च निष्ठान्ताच्छिष्टशब्दं प्रचक्षते ॥ २४ ॥
मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्म्मिकाः ।
मनुः सप्तर्षयश्चैव लोकसन्तानकारिणः ॥ २५ ॥
तिष्ठन्तीह च धर्मार्थं तांश्छिष्टान् सम्प्रचक्षते ।
तैः शिष्टैश्चलितो धर्मः स्थाप्यते वै युगे युगे ॥ २६ ॥
त्रयीवार्त्ता दण्डनीतिः प्रजा वर्णाश्रमेप्सया ।
शिष्टैराचर्य्यते यस्मात् पुनश्चैव मनुक्षये ॥ २७ ॥
पूर्वैः पूर्वैर्मतत्वाच्च शिष्टाचारः स शाश्वतः ।
दानं सत्यं तपो लोको विद्येज्या पूजनन्दमः ॥२८॥
अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ।
शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च ह ॥ ३९ ॥
मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ।
विज्ञेयः श्रवणाच्छ्रौतः स्मरणात् स्मार्त्त उच्यते ॥४०॥
इज्यावेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः ।
प्रत्यङ्गानि प्रवक्ष्यामि धर्मस्येह तु लक्षणम् ॥ ४१ ॥
दृष्टानुभूतमर्थञ्च यः पृष्टो न विगूहते ।
यथाभूतप्रवादस्तु इत्येतद्धर्मलक्षणम् ॥ ४२ ॥
ब्रह्मचर्यं तपो मौनं निराहारत्वमेव च ।

मनोज्ञैस्तत्र तैर्भोगैः सुखिनो ह्युपपेदिरे ॥ १९ ॥
अथ सन्तः प्रवक्ष्यामि साधूनथ ततश्च वै ।
ब्राह्मणाः श्रुतिशब्दाश्च देवानां व्यक्तमूर्त्तयः ॥ २० ॥
संपूज्य ब्रह्मणा ह्यान्तस्तेन सन्तः प्रचक्षते ।
सामान्येषु च धर्मेषु तथा वैशेषिकेषु च ॥ २१ ॥
ब्रह्मक्षत्रविशो युक्ताः श्रौतस्मार्तेन कर्म्मणा ।
वर्णाश्रमेषु युक्तस्य सुखोदर्कस्य स्वर्गतौ ॥ २२ ॥
श्रौतस्मार्तो हि यो धर्मो ज्ञानधर्मः स उच्यते ।
दिव्यानां साधनात् साधुर्ब्रह्मचारी गुरोर्हितः ॥ २३ ॥
कारणात् साधनाच्चैव गृहस्थः साधुरुच्यते ।
तपसश्च तथारण्ये साधुर्वैखानसः स्मृतः ॥ २४ ॥
यतमानो यतिः साधुः स्मृतो योगस्य साधनात् ।
धर्मो धर्मगतिः प्रोक्तः शब्दो ह्येष क्रियात्मकः ॥ २५ ॥
कुशलाकुशलौ चैव धर्माधर्मौ ब्रवीत् प्रभुः ।
अथ देवाश्च पितर ऋषयश्चैव मानुषाः ॥ २६ ॥
अयं धर्मो ह्ययं नेति ब्रुवते मौनमूर्त्तिना ।
धर्मेति धारणे धातुर्महत्त्वे चैव उच्यते ॥ २७ ॥
आधारणे महत्त्वे वा धर्म्मः स तु निरुच्यते ।
तत्रेष्टप्रापको धर्म्म आचार्यैरुपदिश्यते ॥ २८ ॥
अधर्म्मश्चानिष्टफल आचार्यैर्नोपदिश्यते ।
वृद्धाश्चालोलुपाश्चैव आत्मवन्तो ह्यदाम्भिकाः ॥ २९ ॥
सम्यग्विनीता मृदवस्तानाचार्यान् प्रचक्षते ।
धर्मज्ञैर्विहितो धर्म्मः श्रौतस्मार्तो द्विजातिभिः ॥ ३० ॥
दाराग्निहोत्रसम्बन्धमिज्या श्रौतस्य लक्षणम् ।

स्मार्त्तो वर्णाश्रमाचारो यमैश्च नियमैर्युतः ॥३१॥
पूर्वेभ्यो वेदयित्वेह श्रौतं सप्तर्षयोऽब्रुवन् ।
ऋचो यजूंषि सामानि ब्रह्मणोऽङ्गानि वै श्रुतिः ॥३२॥
मन्वन्तरस्यातीतस्य स्मृत्वा तन्मनुरब्रवीत् ।
तस्मात् स्मार्तः स्मृतो धर्म्मो वर्णाश्रमविभागशः ॥३३॥
एवं वै द्विविधो धर्म्मः शिष्टाचारः स उच्यते ।
शिषेर्धातोश्च निष्ठन्ताच्छिष्टशब्दं प्रचक्षते ॥ ३४ ॥
मन्वन्तरेषु ये शिष्टा इह तिष्ठन्ति धार्म्मिकाः ।
मनुः सप्तर्षयश्चैव लोकसन्तानकारिणः ॥ ३५ ॥
तिष्ठन्तीह च धर्मार्थं तांश्छिष्टान् सम्प्रचक्षते ।
तैः शिष्टैश्चलितो धर्मः स्थाप्यते वै युगे युगे ॥ ३६ ॥
त्रयीवार्त्ता दण्डनीतिः प्रजा वर्णाश्रमेप्सया ।
शिष्टैराचर्य्यते यस्मात् पुनश्चैव मनुक्षये ॥ ३७ ॥
पूर्वैः पूर्वैर्मतत्वाच्च शिष्टाचारः स शाश्वतः ।
दानं सत्यं तपो लोभो विद्येज्या पूजनन्दमः ॥३८॥
अष्टौ तानि चरित्राणि शिष्टाचारस्य लक्षणम् ।
शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयश्च ह ॥ ३९ ॥
मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृतः ।
विज्ञेयः श्रवणाच्छ्रौतः स्मरणात् स्मार्त्त उच्यते ॥४०॥
इज्यावेदात्मकः श्रौतः स्मार्तो वर्णाश्रमात्मकः ।
प्रत्यङ्गानि प्रवक्ष्यामि धर्मस्येह तु लक्षणम् ॥ ४१ ॥
दृष्टानुभूतमर्थञ्च यः पृष्टो न विगूहते ।
यथाभूतप्रवादस्तु इत्येतद्धर्मलक्षणम् ॥ ४२ ॥
ब्रह्मचर्य्यं तपो मौनं निराहारत्वमेव च ।

इत्येतत्तपसो रूपं सुघोरन्तु दुरासदम् ॥ ४३ ॥
पशूनां द्रव्यहविषा मृक्सामयजुषां तथा ।
ऋत्विजां दक्षिणायाश्च संयोगो यज्ञ उच्यते ॥ ४४ ॥
आत्मवत्सर्वभूतेषु यो हिताय शुभाय च ।
वर्त्तते सततं हृष्टः क्रिया श्रेष्ठा दया स्मृता ॥ ४५ ॥
आक्रुष्टोऽभिहतो यस्तु नाक्रोशेत्प्रहरेदपि ।
अदुष्टो वाङ्मनःकायैस्तितिक्षुः सा क्षमा स्मृता ॥४६॥
स्वामिना रक्ष्यमाणानामुत्सृष्टानाञ्च सम्भ्रमे ।
परस्वानामनादानमलोभ इति संज्ञितः ॥ ४७ ॥
मैथुनस्यासमाचारो जल्पनाच्चिन्तनात्तथा ।
निवृत्तिर्ब्रह्मचर्य्यञ्च तदेतच्छमलक्षणम् ॥ ४८ ॥
आत्मार्थे वा परार्थे वा इन्द्रियाणीह यस्य वै ।
विषये न प्रवर्त्तन्ते दमस्यैतत्तु लक्षणम् ॥ ४९ ॥
पञ्चात्मके यो विषये कारणे चाष्टलक्षणे ।
न क्रुध्येत प्रतिहतः स जितात्मा भविष्यति ॥ ५०॥
यद्यदिष्टतमं द्रव्यं न्यायेनैवागतञ्च यत् ।
तत्तद्गुणवते देयमित्येतद्दानलक्षणम् ॥ ५१ ॥
श्रुतिस्मृतिभ्यां विहितो धर्मो वर्णाश्रमात्मकः ।
शिष्टाचारप्रवृत्तश्च धर्मोऽयं साधुसम्मतः ॥ ५२ ॥
अप्रद्वेषो ह्यनिष्टेषु इष्टं वै नाभिनन्दति ।
प्रीतितापविषादानां विनिवृत्तिर्विरक्तता ॥ ५३ ॥
संन्यासः कर्मणां न्यासः कृतानामकृतैः सह ।
कुशलाकुशलाभ्यां तु प्रहाणं न्यास उच्यते ॥५४॥
अव्यक्तादिविशेषान्तविकारेऽस्मिन्निवर्त्तते ।

विशेषं काङ्क्षतां शक्र ! सामान्याद्भ्रंशनं फलम् ॥२१८॥
श्रुत्वैतद्वचनं शक्रस्तमुवाचामरैर्युतः ।
शक्र उवाच । वयं प्रमाणास्त्वेवात्र रतिकान्त ! न संशयः २१९
सन्देशेन विना शक्ति रुपकारस्य नेष्यते ।
कस्यचिच्च क्वचिद्दृष्टं सामर्थ्यं न तु सर्वतः ॥ २२० ॥
इत्युक्तः प्रययौ कामः सखायं मधुमाश्रितः ।
रतियुक्तो जगामाशु प्रस्थन्तु हिमभूभृतः ॥ २२१ ॥
स तु तत्राकरोच्चिन्तां कार्यस्योपायपूर्विकाम् ।
महार्था ये हि निष्कम्पा मनस्तेषां सुदुर्जयम् ॥२२२॥
तदादावेव संक्षोभ्य नियतं सुजयो भवेत् ।
संसिद्धिं प्राप्नुयुश्चैव पूर्वं संशोध्य मानसम् ॥ २२३ ॥
कथञ्च विविधैर्भावैर्द्वेषानुगमनं विना ।
क्रोधः क्रूरतरासङ्गा द्रावणेर्षंत्रा महासखीम् ॥२२४॥
चापलस्यानूर्मि विध्वस्तधैर्याधारां महाबलाम् ।
तामस्य विनियोक्ष्यामि मनसो विकृतिम्पराम् ॥२२५॥
पिधाय धैर्यद्वाराणि सन्तोषमपकृष्य च ।
अवगन्तुं हि मां तत्र न कश्चिदतिपण्डितः ॥ २२६॥
विकल्पमात्रावस्थाने वैरूप्यं मनसो भवेत् ।
पश्चान्मूलक्रियारम्भगम्भीरावर्तदुस्तरः ॥ २२७ ॥
हरिष्यामि हरस्याहं तपस्तस्य स्थिरात्मनः ।
इन्द्रियग्राममावृत्य रम्यसाधनसंविधिः ॥ २२८ ॥
चिन्तयित्वेति मदनोभूतभर्तुस्तदाश्रमम् ।
जगाम जगतीसारं सरलद्रुमवेदिकम् ॥ २२९ ॥
शान्तसत्वसमाकीर्णमचलप्राणसङ्कुलम् ।

नानापुष्पलताजालं गगनस्थगणेश्वरम् ॥ २१० ॥
निर्व्यग्रवृषभाध्युष्टनीलशाद्वलसानुकम् ।
तत्रापश्यत् त्रिनेत्रस्य रम्यं कक्ष्याद्द्वितीयकम् ॥२११॥
वीरकं लोकवीरेशमीशानसदृशद्युतिम् ।
रक्तकुङ्कुमकिञ्जल्कपुञ्जपिङ्गजटासटम् ॥ २१२ ॥
वेत्रपाणिनमव्यग्रमुग्रभोगीन्द्रभूषणम् ।
ततो निमीलितोन्निद्रपद्मपत्राभलोचनम् ॥ २१३ ॥
प्रेक्षमाणमृजुस्थानस्थितनासाग्रलोचनम् ।
अवस्तरसिंहेन्द्रचर्मलम्बोत्तरीयकम् ॥ २१४ ॥
श्रवणाहिफणन्मुक्तनिःश्वासानलपिङ्गलम् ।
प्रेङ्खत्कपालपर्य्यन्तलुम्बिलम्बिजटाचयम् ॥ २१५ ॥
कृतवासुकिपर्य्यङ्कनाभिमूलनिवेशितम् ।
ब्रह्माञ्जलिस्थपुच्छाग्रनिबद्धोरगभूषणम् ॥ २१६ ॥
ददर्श शङ्करं कामः क्रमप्राप्तान्तिकं शनैः ।
ततो भ्रमरझङ्कारमालम्ब्य द्रुमसानुकम् ॥ २१७ ॥
प्रविष्टः कर्णरन्ध्रेण भवस्य मदनो मनः ।
शङ्करस्तमथाकर्ण्य मधुरं मदनाश्रयम् ॥ २१८ ॥
सस्मार दक्षदुहितां दयितां रक्तमानसः ।
ततः सा तस्य शनकैस्तिरोभूयातिनिर्मला ॥२१९॥
समाधिभावना तस्थौ लक्ष्यप्रत्यक्षरूपिणी ।
ततस्तन्मयतां यातः प्रत्यूहपिहिताशयः ॥ २२० ॥
वशित्वेन बुधोऽभिज्ञो विकृतिं मदनात्मिकाम् ।
ईषत्कोपसमाविष्टो धैर्यमालम्ब्य धूर्जटिः ॥ २२१ ॥
निरासे मदनं जित्वा योगमायासमावृतः ।

स तया माययाविष्टो जज्वाल मदनस्ततः ॥ २४१ ॥
इच्छाशरीरो दुर्जेयोरोषदोषमहाश्रयः।
हृदयान्निर्गतः सोऽथ वासनाव्यसनात्मकः ॥ २४२ ॥
बहिःस्थलं समालम्ब्य ह्युपतस्थौ झषध्वजः।
अनुयातोऽथ हृद्येन मित्रेण मधुना सह ॥ २४४ ॥
सहकारतरौ दृष्ट्वा मृदुमारुतनिर्धुतम्।
स्तबकं मदनोरम्यं हरवक्षसि सत्वरम् ॥२४५ ॥
मुमोच मोहनं नाम मार्गणं मकरध्वजः।
शिवस्य हृदये शुद्धे नाशशालो महाशरः ॥ २४६ ॥
पपात परुषप्रांशुः पुष्पबाणो विमोहनः।
ततः करुणसन्देहोविद्धस्तु हृदये भवः ॥ २४७ ॥
बभूव भूधरौपम्यधैर्योऽपि मदनोन्मुखः।
ततः प्रभुत्वाद्भावानां संक्षोभं समपद्यत ॥ २४८ ॥
बाह्यं च बहु समासाद्य प्रत्यूहप्रसवात्मकम्।
ततः कोपानलोद्भूतघोरहुङ्कार भीषणे ॥ २४९ ॥
बभूव वदने नेत्रं तृतीयमनलाकुलम्।
रुद्रस्य रौद्रवपुषो जगत्संहारभैरवम् ॥ २५० ॥
तदन्तिकस्थे मदने व्यस्फारयत धूर्जटिः।
तं नेत्रविस्फुलिङ्गेन क्रोशतान्नाकवासिनाम् ॥२५१॥
गमितोभस्मसात्तूर्णं कन्दर्पः कामिदर्पकः।
स तु तं भस्मसात् कृत्वा हरनेत्रोद्भवोऽनलः ॥ २५२ ॥
व्यजृम्भत जगत् दग्धुं ज्वालाहुङ्कार घस्मरः।
ततो भवोजगद्धेतोर्व्यभजज्जातवेदसम् ॥ २५३ ॥
सहकारे मधौ चन्द्रसुमनःसु परेष्वपि।

भृङ्गेषु कोकिलास्येषु विभागेन स्मरानलम् ॥ २५४ ॥
स बाह्यान्तरविद्धेन हरेण स्मरमार्गणः ।
रागस्नेहसमिद्धात्मधावन् तीव्रहुताशनः ॥ २५५ ॥
विभक्तलोकसंक्षोभकरो दुर्वारजृम्भितः ।
संप्राप्य स्नेहसंपृक्तं कामिनां हृदयं किल ॥ २५६ ॥
ज्वलत्यहर्निशं भीमो दुश्चिकित्स्यमुखात्मकः ।
विलोक्य हरहुङ्कारज्वालाभस्मकृतं स्मरम् ॥ २५७ ॥
विललाप रतिः क्रूरं बन्धुना मधुना सह ।
ततो विलप्य बहुशो मधुना परिसान्त्विता ॥ २५८ ॥
जगाम शरणं देव मिन्दुमौलिं त्रिलोचनम् ।
भृङ्गानुयातां संगृह्य पुष्पितां सहकारजाम् ॥ २५९ ॥
लतां पवित्रकस्थाने पाणौ परभृतां सखीम् ।
निबध्य तु जटाजूटं कुटिलैरलकैरतिः ॥ २६० ॥
उद्धूल्य गात्रं शुभ्रेण हृद्येन स्मरभस्मना ।
जानुभ्यामवनीं गत्वा प्रोवाचेन्दुविभूषणम् ॥ २६१ ॥

रतिरुवाच ।

नमः शिवायास्तु निरामयाय नमः शिवायास्तु मनोमयाय ।
नमः शिवायास्तु सुरार्चिताय तुभ्यं सदाभक्तकृपापराय ॥२६२॥
नमो भवायास्तु भवोद्भवाय नमोऽस्तु ते ध्वस्तमनोभवाय ।
नमोऽस्तु ते गूढमहाव्रताय नमोऽस्तु मायागहनाश्रयाय ॥२६३॥
नमोऽस्तु शर्वाय नमः शिवाय नमोऽस्तु सिद्धाय पुरातनाय ।
नमोऽस्तु कालाय नमः कलाय नमोऽस्तु ते ज्ञानवरप्रदाय ॥२६४
नमोऽस्तु ते कालकलातिगाय नमो निसर्गामलभूषणाय ।
नमोऽस्त्वमेयान्धकमर्दकाय नमः शरण्याय नमोऽगुणाय ॥२६

.ऽस्तु ते भीमगणानुगाय नमोऽस्तु नानाभुवनादिकर्त्रे।
नमोऽस्तु नानाजगतां विधात्रे नमोऽस्तु ते चित्रफलप्रयोक्त्रे २६६
सर्वावसाने ह्यविनाशनेत्रे नमोऽस्तु चित्राध्वरभागभोक्त्रे।
नमोऽस्तु भक्ताभिमतप्रदात्रे नमः सदा ते भवसङ्गहर्त्रे॥ २६७
अनन्तरूपाय सदैव तुभ्यमसह्यकोपाय नमोऽस्तु तुभ्यम्।
शशाङ्कचिह्नाय सदैव तुभ्यममेयमानाय नमः स्तुताय॥ २६८॥
वृषेन्द्रयानाय पुरान्तकाय नमः प्रसिद्धाय महौषधाय।
नमोऽस्तु भक्त्याभिमतप्रदाय नमोऽस्तु सर्वार्तिहराय तुभ्यम् २६९
चराचराचारविचारवर्यमाचार्यमुत्प्रेक्षितभूतसर्गम्।
त्वामिन्दुमौलिं शरणं प्रपन्ना प्रिया प्रमेयं महतां महेशम् २७०
प्रयच्छ मे कामयशः समृद्धिं पुनः प्रभो! जीवतु कामदेवः।
प्रियं विना त्वां प्रियजीवितेषु त्वत्तोऽपरः को भुवनेष्विहास्ति २७१
प्रभुः प्रियायाः प्रसवः प्रियाणां प्रणीतपर्यायपरापरार्थः।
त्वमेवमेको भुवनस्य नाथो दयालुरुन्मूलितभक्तभीतिः॥२७२॥
इत्थं स्तुतः शङ्कर ईड्य ईशो वृषाकपिर्मन्मथकान्तया तु।
तुतोष दोषाकरखण्डधारी उवाच चैनां मधुरं निरीक्ष्य २७३॥

शङ्कर उवाच।

भविष्यतीति च कामोऽयं कालात् कान्तोऽचिरादपि।
अनङ्ग इति लोकेषु स विख्यातिं गमिष्यति॥२७४॥
इत्युक्ता शिरसावन्द्य गिरिशङ्कामवल्लभा।
जगामोपवनं रम्यं रतिस्तु हिमभूभृतः॥ २७५॥
रुरोद चापि बहुशो दीना रम्ये स्थले तु सा।
मरणव्यवसायात्तु निवृत्ता सा हराज्ञया॥ २७६॥
अथ नारदवाक्येन चोदितो हिमभूधरः।

कृताभरणसंस्कारां कृतकौतुकमङ्गलाम् ॥ २७७ ॥
स्वर्गपुष्पकृतापीडां शुभ्रचीनांशुकाम्बराम् ।
सखीभ्यां संयुतां शैलो गृहीत्वा स्वसुतान्ततः ॥२७८॥
जगाम शुभयोगेन तदा संपूर्णमानसः ।
स कान्ननान्युपाक्रम्य वनान्युपवनानि च ॥२७९ ॥
ददर्श रुदतीं नारीमप्रतर्क्यमहौजसम् ।
रूपेणासदृशीं लोके रम्येषु वनसानुषु ॥ २८० ॥
कौतुकेन परामृश्य तां दृष्ट्वा रुदतीं गिरिः ।
उपसर्प्य ततस्तस्या निकटे सोऽभ्यगच्छत ॥ २८१ ॥
हिमवानुवाच। कासि कस्यासि कल्याणि! किमर्थञ्चापि रोदिषि
नैतदल्पं महासत्वे कारणं लोकसुन्दरि ! ॥ २८२ ॥
सा तस्य वचनं श्रुत्वा उवाच मधुना सह ।
रुदती शोकजननं श्वसती दैन्यवर्द्धनम् ॥ २८३ ॥
रतिरुवाच। कामस्य दयितां भार्यां रतिं मां विद्धि सुव्रत ! ।
गिरावस्मिन्महाभाग ! गिरिशस्तपसि स्थितः ॥२८४ ॥
तेन प्रत्यूहरुष्टेन विस्फार्यालोक्य लोचनम् ।
दग्धोऽसौ झषकेतुस्तु मम कान्तोऽतिवल्लभः ॥ २८५ ॥
अहन्तु शरणं याता तं देवं भयविह्वला ।
स्तुतवत्यथ संस्तुत्या ततो मां गिरिशोऽब्रवीत् ॥ २८६॥
तुष्टोऽहं कामदयिते ! कामोऽयन्ते भविष्यति ।
त्वत्स्तुतिं चाप्यधीयानो नरो भक्त्या मदाश्रयः ॥२८७
लप्स्यते काङ्क्षितं कामं निवर्त्य मरणादितः ।
प्रतीक्ष्यती च तद्वाक्यमाशावेशादिभिश्चिरम् ॥ २८८॥
शरीरं परिरक्षिष्ये कञ्चित् कालं महाद्युते ! ।

इत्युक्तस्तु तदा तस्या शैलः सम्भ्रमभीषितः ॥ २८९ ॥
पाणावादाय हि सुतां गन्तुमैच्छत् स्वकम्पुरम्।
भाविनोऽवश्यभावित्वाद्भविनी भूतभाविनी ॥ २९० ॥
लज्जमाना सखीमुखैरुवाच पितरङ्गिरिम्।
शैलदुहितोवाच। दुर्भाग्येन शरीरेण किं ममानेन कारणम् २९
कथं च तादृशं प्राप्तं सुखं मे स पतिर्भवेत्।
तपोभिः प्राप्यतेऽभीष्टं नासाध्यं हि तपस्यतः ॥२९१
दुर्भगत्वं वृथा लोको वहते सति साधने।
जीवितात् दुर्भगाच्छ्रेयो मरणं ह्यतपस्यतः ॥२९२ ॥
भविष्यामि न सन्देहो नियमैः शोषये तनुम्।
तपसि भ्रष्टसन्देहे उद्यमोऽर्थजिगीषया ॥ २९४ ॥
साहन्तपः करिष्यामि यदहं प्राप्य दुर्लभा।
इत्युक्तः शैलराजस्तु दुहिता स्नेहविक्लवः ॥ २९५ ॥
उवाच वाचा शैलेन्द्रो स्नेहगद्गदवर्णया।

हिमवानुवाच।

उमेति चपले! पुत्रि! न क्षमं तावकं वपुः ॥२९६॥
ततः स चिन्तयाविष्टो दुहितां प्रशशंस च।
ततोऽन्तरिक्षे दिव्या वागभूद्भुवनभूतले ॥ २९७ ॥
उमेति चपले! पुत्रि! त्वयोक्ता तनया ततः।
उमेति नाम तेनास्या भुवनेषु भविष्यति ॥ २९८ ॥
सिद्धिं च मूर्तिमत्येषा साधयिष्यति चिन्तिताम्।
इति श्रुत्वा तु वचन माकाशात्काशपाण्डुरः ॥२९९॥
अनुज्ञाय सुतां शैलो जगामाशु स्वमन्दिरम्।
सूत उवाच। शैलजापि ययौ शैलमगम्यमपि दैवतैः ॥३००॥

अपरे तु परिच्छिन्ना नानाकाराभ्युपक्रमाः ॥ १२४ ॥
देहान्तरार्थं मारब्धमापतन्ति हितप्रदम् ।
मम त्वाकाशसम्भूतपुष्पदामविभूषितम् ॥ १२५ ॥
वन्ध्यासुतं प्राप्तुकामा मनः प्रसरते मुहुः ।
अहं किल भवं देवं पतिं प्राप्तुं समुद्यता ॥ १२६ ॥
प्रकृत्यैव दुराधर्षं तपस्यन्तं तु संप्रति ।
सुरासुरैरनिर्णीतपरमार्थक्रियाश्रयम् ॥ १२७ ॥
साम्प्रतं चापि निर्दग्धमदनं वीतरागिणाम् ।
कथमाराधयेद्योगं मादृशी तादृशं शिवम् ॥ १२८ ॥
इत्युक्ता मुनयस्तेतु स्थिरतां मनसस्ततः ।
ज्ञातुमस्या वचः प्रोचुः प्रक्रमात्प्राकृतार्थकम् ॥ १२९ ॥
मुनय ऊचुः । द्विविधन्तु सुखन्तावत् पुत्रि ! लोकेषु भाव्यते ।
शरीरस्यास्य सम्भोगैश्चेतसश्चापि निर्वृतिः ॥ १३० ॥
प्रकृत्या स तु दिग्वासा भीमः पितृवनाश्रयः ।
कपाली भिक्षुको नग्नो विरूपाक्षः स्थिरक्रियः ॥ १३१ ॥
प्रमत्तोन्मत्तकाकारो बीभत्सकृतसंग्रहः ।
यतिनानेन कः स्वार्थो मूर्त्तानर्थेन काङ्क्षितः ॥ १३२ ॥
यदि ह्यस्य शरीरस्य भोगमिच्छसि साम्प्रतम् ।
तत कथन्ते महादेवात् भयभाजो जुगुप्सितात् ॥ १३३ ॥
स्रवद्रक्तवसाभ्यक्तकपालकृतभूषणात् ।
श्वसदुग्रभुजङ्गेन्द्र कृतभूषणभीषणात् ॥ १३४ ॥
श्मशानवासिनो रौद्रप्रमथानुगतात् सति ! ।
सुरेन्द्रमुकुटव्रातनिघृष्टचरणोऽरिहा ॥ १३५ ॥
हरिरस्ति जगद्धाता श्रीकान्तोऽनन्तमूर्त्तिमान् ।

नाथो यज्ञभुजामस्ति तथेन्द्रः पाकशासनः ॥२३६॥
देवतानां निधिश्चास्ति ज्वलनः सर्वकामकृत्।
वायुरस्ति जगद्धाता यः प्राणः सर्वदेहिनाम् ॥ २३७ ॥
तथा वैश्रवणो राजा सर्वार्थमतिमान् विभुः।
एभ्य एकतमं कस्मात् नत्वं न सम्प्राप्तुमिच्छसि ॥२३८॥
उत्तानदेहसंप्राप्तया सुखं मनसेप्सितम्।
एवमेतत्त्ववाप्यत्र प्रभवो नाकसम्पदाम् ॥ २३९ ॥
अस्मिन्नेह परत्रापि कल्याणप्राप्तयस्तव।
पितुरेवास्ति तत् सर्वं सुरेभ्यो यन्न विद्यते ॥ २४० ॥
अतस्तत्प्राप्तये क्लेशः स वाप्यत्राफलस्तव।
प्रायेण प्रार्थितो भद्रे! सुस्वल्पोह्यतिदुर्लभः ॥ २४१ ॥
अस्यते विधियोगस्य धाता कर्तात्र चैव हि।
सूत उवाच। इत्युक्ता सा तु कुपिता मुनिवर्येषु शैलजा ॥२४२॥
उवाच कोपरक्ताक्षी स्फुरद्भिर्दशनच्छदैः।
देव्युवाच। असदुपन्यस्य का प्रीतिर्व्यसनस्य क्व यन्त्रणा ॥२४३॥
विपरीतार्थबोद्धारः सत्पथे केन योजिताः।
एवं मां वेत्थ दुष्प्रज्ञां ह्यस्थानासदुपन्यप्रियाम् ॥२४४॥
न मां प्रति विचारोऽस्ति यत्नेहासदुपन्यहाविती।
प्रजापतिसमाः सर्वे भवन्तः सर्वदर्शिनः ॥ २४५ ॥
नूनं न वेत्थ तं देवं शाश्वतं जगतः प्रभुम्।
अजमीशानमव्यक्तममेयमहिमोदयम् ॥ २४६ ॥
आस्तान्तद्धर्मसद्भावसम्बोधस्तावदद्भुतः।
विदुर्यन्न हरिब्रह्मप्रमुखाहि सुरेश्वराः ॥ २४७ ॥
यत्तस्य विभवात् स्फीतं भुवनेषु विजृम्भितम्।
प्रकटं सर्वभूतानां तदप्यत्र न वेत्थ किम् ॥ २४८ ॥

कस्यैतद्गगनं मूर्तिः कस्याग्निः कस्य मारुतः ।
कस्य भूः कस्य वरुणः कश्चन्द्रार्कविलोचनः ॥ ३४९ ॥
कस्यार्चयन्ति लोकेषु लिङ्गं भक्त्या सुरासुराः ।
यं ब्रुवन्तीश्वरं देवा विधीन्द्राद्या महर्षयः ॥ ३५० ॥
प्रभावं प्रभवञ्चैव तेषामपि न वेत्थ किम् ।
अदितिः कस्य मातेयं कस्मात् जातो जनार्दनः ॥३५१॥
अदितिः कश्यपाज्जाता देवा नारायणादयः ।
मरीचेः कश्यपः पुत्रो ह्यदितिर्दक्षपुत्रिका ॥ ३५२ ॥
मरीचिश्चापि दक्षश्च पुत्रौ तौ ब्रह्मणः किल ।
ब्रह्मा हिरण्मयात्त्वण्डाद्दिव्यसिद्धिविभूषितात् ॥३५३॥
कस्य प्रादुरभूद्ध्यानात् प्रबुद्धाः प्राकृतांशकाः ।
प्रकृतौ तु तृतीयायां महद्धिङ्जननक्रिया ॥ ३५४ ॥
जाता ससर्ज षड्वर्गान् बुद्धिपूर्वान् स्वकर्मजान् ।
अजातकोऽभवद्वेधा ब्रह्मणोऽव्यक्तजन्मनः ॥ ३५५ ॥
यः स्वयोगेन संक्षोभ्य प्राकृतं कृतवानिदम् ।
ब्रह्मणः सिद्धसर्वार्थमैश्वर्यं लोककर्तृताम् ॥ ३५६ ॥
विदुर्विष्ण्वादयो यस्य स्वमहिम्ना सदैव हि ।
कृत्वान्यं देहमन्यादृक् तादृक् कृत्वा पुनर्हरिः ॥३५७
कुरुते जगतः कृत्य मुत्तमाधममध्यमम् ।
एवमेव हि संसारो यो जन्ममरणात्मकः ॥ ३५८ ॥
कर्मणश्च फलं ह्येतत् नानारूपसमुद्भवम् ।
अथ नारायणो देवः स्वकां मायां समाश्रयत् ॥ ३५९॥
तत्प्रेरितः प्रकुरुते जन्म नानाप्रकारकम् ।
सापि कर्मण एवोक्ता प्रेरणी विवशात्मनाम् ॥३६०॥

यथोन्मादादिजुष्टस्य मतिरेव हि सा भवेत्।
दृष्टान्येव यथार्थानि विपरीतानि मन्यते॥ २६१॥
लोकस्य व्यवहारेषु सृष्टेषु सहते सदा।
धर्माधर्म्मफलावाप्तौ विष्णुरेव निबोधितः॥ २६२॥
अथानादित्वमस्यास्ति सामान्यात्तु तदात्मना।
न ह्यस्य जीवितं दीर्घं दृष्टं देहे तु कुत्रचित्॥२६३॥
भवद्भिर्यस्य नोद्दिष्टमन्तमग्रमथापि वा।
देहिनां धर्म्म एवैष क्वचिज्जायेत् क्वचिन् म्रियेत्॥२६४
क्वचिद्गर्भगतो नश्येत् क्वचिज्जीवेज्जरामयः।
क्वचित्समाः शतं जीवेत् क्वचिद्बाल्ये विपद्यते॥ २६५॥
शतायुः पुरुषो यस्तु सोऽनन्तः स्वल्पजन्मनः।
जीवितो न म्रियत्यग्रे तस्मात् सोऽमर उच्यते॥२६६॥
अदृष्टजन्मनिधना ह्येवं विष्ण्वादयो मताः।
एतत् संशुद्धमैश्वर्यं संसारे को लभेदिह॥ २६७॥
तत्र चयादियोगात् तु नानाश्चर्य्यस्वरूपिणि।
तस्माद्विश्वरान् सर्व्वान् मलिनान् स्वल्पभूतिकान्२६८
नाहं भद्राः! किलेच्छामि ऋते सर्व्वात् पिनाकिनः।
स्थितं च तारतम्येन प्राणिनां परमन्त्विदम्॥ २६९॥
धीबलैश्वर्यकार्यादिप्रमाणं महतां महत्।
यस्मान्न किञ्चिदपरं सर्वं यस्मात् प्रवर्त्तते॥ २७०॥
यस्यैश्वर्यमनाद्यन्तं तमहं शरणङ्गता।
एष मे व्यवसायश्च दीर्घोऽतिविपरीतकः॥ २७१॥
यात वा तिष्ठतैवाथ मुनयो! मद्विधायकाः!।
एवं निशम्य वचनं देव्या मुनिवरास्तदा॥ २७२॥

आनन्दाश्रुपरीताक्षाः सस्वजुस्तां तपस्विनीम्।
ऊचुश्च परमप्रीताः शैलजां मधुरं वचः॥ १७३॥
ऋषय ऊचुः। अत्यद्भुतास्यहो देवि! ज्ञानमूर्तिरिवामला।
प्रसादयति नोभावं भवभावप्रतिश्रयात्॥ १७४॥
न तु विद्मो वयन्तस्य देवस्यैश्वर्यमद्भुतम्।
त्वन्निश्चयस्य दृढतां वेत्तुं वयमिहागताः॥ १७५॥
अचिरादेव तन्वङ्गि! कामस्तेऽयं भविष्यति।
आदित्यस्य प्रभायाऽन्ति रत्नेभ्यः क्व द्युतिः पृथक्॥१७६
कोऽर्थोवर्णात्मिका व्यक्तः कथं त्वं गिरिशं विना।
यामो नैकाभ्युपायेन तमभ्यर्थयितुं वयम्॥ १७७॥
अस्माकमपि वै सोऽर्थः सुतरां हृदि वर्त्तते।
अतस्त्वमेव सा बुद्धिर्यतो नीतिस्त्वमेव हि॥ १७८॥
अतोनिःसंशयं कार्यं शङ्करोऽपि विधास्यति।
इत्युक्ताः पूजिता याता मुनयो गिरिकन्यया॥ १७९॥
प्रययुर्गिरिशं द्रष्टुं प्रस्थं हिमवतो महत्।
गङ्गाम्बुप्लावितात्मानं पिङ्गबद्धजटासटम्॥ १८०॥
भृङ्गानुयातपाणिस्थमन्दारकुसुमस्रजम्।
गिरेः संप्राप्य तं प्रस्थं ददृशुः शङ्कराश्रमम्॥ १८१॥
प्रशान्ताशेषसत्त्वौघं नवस्तिमितकाननम्।
निःशब्दाक्षोभसलिलप्रपातं सर्वतोदिशम्॥ १८२॥
तत्रापश्यंस्ततो द्वारि वीरकं वेत्रपाणिनम्।
सप्त ते मुनयः पूज्या विनीताः कार्य्यगौरवात्॥१८३॥
तमूचुर्मधुरभाषिण्या वाचा ते वाग्मिनाम्वराः।
द्रष्टुं वयमिहायाताः शरण्यं गणनायकम्॥१८४॥

त्रिलोचनं विजानीहि सुरकार्य्यप्रचोदिताः।
त्वमेव नोगतिस्त्वं यथाकाशानतिक्रमः॥ १८५॥
सत्कारितैष प्रायेण प्रतीहारमयः प्रभुः।
इत्युक्तो मुनिभिः सोऽथ गौरवात्तानुवाच सः॥१८६॥
समन्वास्यापरां सन्ध्यां स्नातुं मन्दाकिनीजले।
क्षणेन भविता विप्रास्तत्र द्रक्ष्यथ शूलिनम्॥ १८७॥
इत्युक्ता मुनयस्तस्थुस्ते तत्कालप्रतीक्षिणः।
गम्भीराम्बुधरं प्राहट् तृषिताश्चातका यथा॥ १८८॥
ततः क्षणेन निष्पन्नसमाधानक्रियाविधिः।
वीरासनं विभेदेशो मृगचर्मनिवासितम्॥ १८९॥
ततो विनीतो जानुभ्यामवलम्ब्य महीस्थितिम्।
उवाच वीरकोदेवं प्रणामैकसमाश्रयः॥ १९०॥
संप्राप्ता मुनयः सप्त त्वां द्रष्टुं दीप्ततेजसः।
विभो! समादिशद्रष्टुमवगन्तुमिहार्हसि॥ १९१॥
इत्युक्तो धूर्जटिस्तेन वीरकेण महात्मना।
भ्रूभङ्गसंज्ञया तेषां प्रवेशाज्ञां ददौ तदा॥ १९२॥
मूर्द्धकम्पेन तान् सर्वान् वीरकोऽपि महामुनीन्।
आजुहाव विदूरस्थान् दर्शनाय पिनाकिनः॥ १९३॥
त्वराबद्धार्द्धचूडास्ते लम्बमानाजिनाम्बराः।
विविशुर्वेदिकां सिद्धां गिरिशस्य विभूतिभिः॥१९४॥
बद्धपाणिपुटाक्षिप्तनाकपुष्पोत्करास्ततः।
पिनाकिपादयुगलं यथानाकनिवासिनः॥ १९५॥
ततः स्निग्धेक्षिताः शान्ता मुनयः शूलपाणिना।
मन्मथारिं ततो हृष्टाः सम्यक् तुष्टुवुरादृताः॥१९६॥

मुनय ऊचुः ।

अहो कृतार्था वयमेव साम्प्रतं सुरेश्वरोऽप्यत्र पुरो भविष्यति ।
त्वत्प्रसादामलवारिसेकतः फलेन काचित्तपसा नियुज्यते ॥६८७
जयत्यसौ धन्यतरो हिमाचलस्तदाश्रयं यस्य सुता तपस्यति ।
सदैत्यराजोऽपि महाफलोदयो विमूलिताशेषसुराहि तारकः ३६८

त्वदीयमंशम्प्रविलोक्य कल्मषात्
स्वकं शरीरं परिमोक्ष्यते हि यः ।
स धन्यधीर्लोकपिता चतुर्मुखो
हरिश्च यत्सम्भ्रमवह्निदीपितः ॥ ३९९ ॥
त्वदङ्घ्रियुग्मं हृदयेन बिभ्रता
महाभितापप्रशमैकहेतुकम् ।
त्वमेव चैको विविधकृतक्रियः
कलेति वाचा विधुरे विभाषते ॥ ४०० ॥
यथाद्य एकस्त्वमवैषि नान्यथा
जगत्तथा निष्टपतान्तव स्पृशेत् ।
न वेत्सि वा दुःखमिदं भवात्मकम्
विहन्यते ते खलु सर्वनिष्क्रिया ॥ ४०१ ॥
उपेक्षसे चेज्जगतामुपद्रवम्
दयामयत्वं तव केन कथ्यते ।
स्वयोगमायामहिमागुहाश्रयम्
न विद्यते निर्मलभूतिगौरवम् ॥ ४०२ ॥
वयं च ते धन्यतराः शरीरिणाम्
यदीदृशं त्वं प्रविलोकयामहे ।
सदर्शनं तेन मनोरथो यथा

प्रयाति साफल्यतया मनोगतम् ॥ ४०३ ॥
जगद्विधानैकविधौ जगन्मुखे
करिष्यमितो वलभिन्मुरा वयम्।
विनेमुरित्थं मुनयोविसृज्य ताम्
गिरं गिरीशश्रुतिभूमिसन्निधौ।
उत्कृष्टकेदारइवावनीतले
सुवीजमष्टिं सुफलाय कर्षकाः ॥ ४०४ ॥

तेषां श्रुत्वा ततोरम्यां प्रक्रमोपक्रमक्रियाम्।
वाचं वाचस्पतिरिव प्रोवाच स्मितसुन्दरः ॥ ४०५ ॥

शर्व उवाच। जाने लोकविधानस्य कन्यासत्कार्य्यमुत्तमम्।
जाता प्रलेय शैलस्य सङ्केतक निरूपणाः ॥ ४०६ ॥
सत्यमुत्कण्ठिताः सर्वे देवकार्य्यार्थे मुद्यताः।
तेषां त्वरन्ति चेतांसि किन्तु कार्य्यं विचिन्तितम् ॥४०७॥
लोकयात्रानुगन्तव्या विशेषेण विचक्षणैः।
सेवन्ते ते यतो धर्मं तत्प्रामाण्यात्परे स्थिताः ॥४०८॥
इत्युक्ता मुनयो जग्मुस्त्वरितास्तु हिमाचलम्।
तत्र ते पूजितास्तेन हिमशैलेन सादरम् ॥ ४०९ ॥
ऊचुर्मुनिवराः प्रीताः स्वल्पवर्णान्वरान्विताः।

मुनय ऊचुः। देवो दुहितरं साक्षात् पिनाकी तव मार्गति॥ ४१०
तच्छीघ्रं पावयात्मान माहुत्येवानलार्पणात्।
कार्य्यमेतच्च देवानां सुचिरं परिवर्त्तते ॥ ४११ ॥
जगदुद्धरणायैष क्रियतां वै समुद्यमः।
इत्युक्तस्ते स्तदा शैलो हर्षाविष्टोऽवदन्मुनीन् ॥४१२
असमर्थोऽभवद्वक्तु मुत्तरं प्रार्थयंश्शिवम्।
ततोमेना मुनीन्वन्द्य प्रोवाच स्नेहविक्लवा ॥ ४१३ ॥

दुहितुस्तान् मुनींश्चैव वरणायैवमर्थवित् ।
मेनोवाच । यदर्थं दुहितुर्जन्म नेच्छन्त्यपि महाफलम् ॥
तदेवोपस्थितं सर्वं प्रक्रमेणैव साम्प्रतम् ।
कुलजन्मवयोरूपविभूत्यर्द्धियुतोऽपि यः ॥ ४१५ ॥
वरस्तस्यापि चाहूय सुता देया ह्ययाचतः ।
तन्ममस्ततपोघोरं कथं पुत्री प्रयास्यति ॥ ४१६ ॥
पुत्रीवाक्याद्यदत्रास्ति विधेयं तद्विधीयताम् ।
इत्युक्ता मुनयस्ते तु प्रियया हिमभूभृतः ॥ ४१७ ॥
ऊचुः पुन रुदारार्थं नारीचित्तप्रसादकम् ।
मुनय ऊचुः । ऐश्वर्यमवगच्छस्व शङ्करस्य सुरासुरैः ॥ ४१८॥
आराध्यमानपादाब्जयुगलत्वात् सुनिर्वृतैः ।
यस्योपयोगि यद्रूपं सा च तत्प्राप्तये चिरम् ॥ ४१९ ॥
घोरं तपस्यति बाला तेन रूपेण निर्वृतिः ।
यस्तद्व्रतानि दिव्यानि नयिष्यति समापनम् ॥४२०॥
तत्र सावहिता तावत्तस्मात् सैव भविष्यति ।
इत्युक्ता गिरिणा सार्द्धन्ते ययुर्यत्र शैलजा ॥ ४२१ ॥
जितार्कज्वलनज्वाला तपस्तेजोमयी शुभा ।
प्रोचुस्तां मुनयः स्निग्धं मन्मान्य पथमागतम् ॥४२२॥
रम्यं प्रियं मनोहारि मा रूपं तपसा दह ।
प्रातस्ते शङ्करः पाणि मेष पुत्रि ! ग्रहीष्यति ॥ ४२३ ॥
वयमर्थितवन्तस्ते पितरं पूर्वमागताः ।
पित्रा सह गृहं गच्छ वयं यामः स्वमन्दिरम् ॥४२४॥
इत्युक्ता तपसः सत्यं फलमस्तीति चिन्त्य सा ।
त्वरमाणा ययौ वेश्म पितुर्दिव्यार्थशोभितम् ॥४२५॥

सा तत्र रजनीं मेने वर्षायुतसमां सतीम् ।
हरदर्शनसञ्जातमहोत्कण्ठा हिमाद्रिजा ॥४२६॥
ततो मुहूर्ते ब्राह्मे तु तस्याश्चक्रुः सुरस्त्रियः ।
नानामङ्गलसन्दोहान्यथावत्क्रमपूर्वकम् ॥ ४२७ ॥
दिव्यमण्डनमङ्गानां मन्दिरे बहुमङ्गले ।
उपासत गिरिं मूर्ता ऋतवः सार्वकामिकाः ॥४२८॥
वायवो वारिदाश्चासन् संमार्जनविधौ गिरेः ।
हर्म्येषु श्रीः स्वयं देवी कृतनानाप्रसाधना ॥ ४२९॥
कान्तिः सर्वेषु भावेषु ऋद्धिश्चाभवदाकुला ।
चिन्तामणिप्रभृतयो रत्नाः शैलं समन्ततः ॥४३० ॥
उपतस्थुर्नगाश्चापि कल्पकाममहाद्रुमाः ।
ओषध्यो मूर्तिमत्यश्च दिव्यौषधिसमन्विताः ॥४३१॥
रसाश्च धातवश्चैव सर्वे शैलस्य किङ्कराः ।
किङ्करास्तस्य शैलस्य व्यग्रास्त्वाज्ञानुवर्तिनः ॥ ४३२ ॥
नद्यः समुद्रा निखिलाः स्थावरं जङ्गमञ्च यत् ।
तत् सर्वं हिमशैलस्य महिमानमवर्द्धयत् ॥ ४३३ ॥
अभवन्मुनयो नागा यक्षगन्धर्वकिन्नराः ।
शङ्करस्यापि विबुधा गन्धमादनपर्वते ॥ ४३४ ॥
सर्वे मण्डनसम्भारास्तस्थुर्निर्मलमूर्तयः ।
शर्वस्यापि जटाजूटे चन्द्रखण्डं पितामहः ॥ ४३५ ॥
बबन्ध प्रणयोदारविस्फारितविलोचनः ।
कपालमालां विपुलां चामुण्डामूर्द्ध्न्यबन्धत ॥४३६ ॥
उवाच चापि वचनं पुत्रं जनय शङ्कर ! ।
यो दैत्येन्द्रकुलं हत्वा मातृकैस्तर्पयिष्यति ॥४३७॥

सौरिर्ज्वलत्किरीटं रत्नमुकुटस्थानलोज्ज्वलाम् ।
भुजगाभरणं गृह्य सज्जं शम्भोः पुरोऽभवत् ॥४२८॥
शक्रो गजाजिनं तस्य वसाभ्यक्तमपपल्लवम् ॥ ४२९ ॥
दध्रे सरभसं स्निग्धहिंस्त्रीर्णमुखपङ्कजम् ॥ ४३९ ॥
वायुश्च विपुलं तीक्ष्णशृङ्गं हिमगिरिप्रभम् ।
वृषं विभूषयामास हरयानं महौजसम् ॥ ४४० ॥
वितेनुर्नयनात्तस्याः शम्भोः सूर्यानलेन्दवः ।
स्वाम्युतिं लोकनाथस्य जगतः कर्मसाक्षिणः ॥४४१॥
चिताभस्म समाधाय कपाले रजतप्रभम् ।
मनुजास्थिमयीं माला माबबन्ध च पाणिना ॥४४२॥
प्रेताधिपः पुरोद्वारं सगदः समवर्तत ।
नानाकारमहारत्नभूषणं धनदाहृतम् ॥ ४४३॥
विहायोद्ग्रसर्पेन्द्रकटकेन स्वपाणिना ।
कर्णोत्तंसमथाकारेणो वासुकिन्तक्षकं स्वयम् ॥ ४४४ ॥
जलाधीशाहृतां स्थाप्य प्रसूनावेष्टितां पृथक् ।
ततस्तु ते गणाधीशा विनयात्तत्र वीरकम् ॥४४५ ॥
प्रोचुर्व्याकृते ! त्वकां समावेदय शूलिने ।
निष्पन्नाभरणं देवं प्रसाध्य शम्भुसाधनः ॥ ४४६ ॥
समयारिधयस्तस्थुः कर्तुं दर्पणविभ्रमम् ।
ततो विलोकितात्मानं महाम्बुधिजलोदरे ॥ ४४७
धरामालिङ्ग्य जानुभ्यां स्थाणुं प्रोवाच केशवः ।
शोभसे देव ! रूपेण जगदानन्ददायिना ॥ ४४८ ॥
मातरः प्रेरयाकामवधूं वैधव्यचिह्निताम् ।
कालोऽयमिति चालक्ष्य प्रकारेङ्गितसंज्ञया ॥ ४४९ ॥

ततस्ताश्चोदिता देवमूचुः प्रहसिताननाः।
रतिः पुरस्तव प्राप्ता नाभाति मदनोज्झिता ॥४५०॥
ततस्तां सन्निवार्याह वामहस्ताग्रसंज्ञया।
प्रयाणे गिरिजावक्त्रदर्शनोत्सुकमानसः ॥ ४५१ ॥

ततो हरो हिमगिरिकन्दराकृतिम्
समुन्नतं मृदुगतिभिः प्रचोदयन्।
महावृषक्षणनमूलाहितक्षणम्
स भूधरानगनिरिव प्रकम्पयन् ॥ ४५२ ॥
ततो हरिद्रुतपदपङ्क्तिभिः पुरः
खरः श्रमात् द्रुमनिकरेषु विश्रमन्।
धरारजःशबलितभूषणोऽब्रवीत्
प्रयात मा कुरुत पथोऽस्य संकटम् ॥ ४५३ ॥
प्रभोः पुनः प्रथमनियोगमुज्झयन्
सुतोऽब्रवीद्भ्रुकुटिमुखोऽपि वीरकः।
वियच्चरा वियति किमद्रिकान्तकम्
प्रयात नो धरणिधराविदूरतः ॥ ४५४ ॥
महार्णवाः कुरुत शिलोपमम्पयः
सुरद्विषा गमनमहातिकर्दमान्।
गणेश्वराश्चपलतया न गम्यताम्
सुरेश्वरैः स्थिरमतिभिश्च गम्यताम् ॥ ४५५ ॥
न भृङ्गिणा स्वतनु मवेक्ष्य नीयते
पिनाकिनः पृथुमुखमच्छमग्रतः।
वृथायमप्रकटितदन्तकोटरम्

त्वमायुधं वहसि विहाय पञ्जरम् ॥ ४५६ ॥
पदन्नयद्रथतुरगैः पुरद्विषा
प्रमुच्यते बहुतरमात्मसङ्कुलम् ।
अमी सुराः पृथगनुयायिभिर्वृताः
पदातयो द्विगुणपथान् हरप्रियाः ॥ ४५७॥
स्ववाहनैः पवनविधूतचामरै-
श्चलध्वजैर्व्रजत विहारशालिभिः ।
सुराः स्वकं किमिति न रागमूर्जितम्
विचार्यते नियतलयतयानुगम् ॥ ४५८ ॥
न किन्नरैरभिभवितुं हि शक्यते
विभूषणप्रचयसमुद्भवोध्वनिः ।
स्वजातिकाः किमिति न षड्जमध्यम-
पृथुस्वरं बहुतर मत्र वर्ण्यते ॥ ४५९ ॥
नतानतानतनतवताङ्गताः
पृथक् तया समयज्ञता विभिन्नताम् ।
विशङ्किता भवदतिभेदशोलिनः
प्रयान्त्यमी द्रुतपदमेव गौडकाः ॥ ४६० ॥
विसंहताः किमिति न पाङ्गवादयः
सगीतकैर्ललितपदप्रयोगजैः ।
प्रभोः पुरो भवति हि यस्य चाद्भुतम्
समुद्धतार्थकमिति तत्प्रतीयते ॥ ४६१ ॥
अमी पृथग्विरचितरम्यरासकम्
विलासिनो बहुगमकस्वभावकम् ।
प्रयुञ्जते गिरिशयशोविसारिणम्

प्रकीर्णकं बहुतरनागजातयः ॥ ४६२ ॥
श्रमो कथं ककुभि कथाः प्रतिक्षणम्
ध्वनन्ति ते विविधबधूविमिश्रिताः ।
न जातयो ध्वनिमुरजासमीरिता
न मूर्च्छिताः किमिति च मूर्च्छनात्मिकाः ॥४६३॥
श्रुतिप्रियक्रमगतिभेदसाधनम्
ततादिकं किमिति न तुम्बरेरितम् ।
न हन्यते बहुविधवाद्यडम्बरम्
प्रकीर्णवीणामुरजादि नाम यत् ॥ ४६४ ॥
इतीरिते गिरिमवधानशालिनः
सुरासुराः सपदि तु वीरकाज्ञया ।
नियामिताः प्रययुरतीव हर्षिता-
श्चराचरं जगदखिलं ह्यपूरयन् ॥ ४६५ ॥
इतिस्वनत्ककुभिरसन्महार्णवे
स्तनद्घने विदलित शैलकन्दरे ।
जगत्यभूत्तुमुल इवाकुलीकृतः
पिनाकिना त्वरितगतेन भूधरः ॥ ४६६ ॥
परिज्वलत् कनक सहस्र तोरणं
क्वचिन्मिलन्मरकतवेश्मवेदिकम् ।
क्वचित् क्वचिद्विमल वैदूर्य भूमिकं
क्वचिद्गलज्जलधर रम्यनिर्झरम् ॥ ४६७ ॥
चलध्वज प्रवर सहस्रमण्डितं
सुरद्रुमस्तवकविकीर्ण चत्वरम् ।
सिता सितारुणरुचिधातुवर्णकं

श्रियोज्ज्वलं प्रविततमार्गगोपुरम् ॥ ४६८ ॥
विजृम्भिता प्रतिमध्वनिनादितं
सुगन्धिभिः पुरपवनैर्मनोहरम् ।
हरो महागिरि नगरं समासदत्
घणादिव प्रवर सुरासुरस्तुतः ॥ ४७९ ॥
तं प्रविशन्तमगात् प्रविलोक्य व्याकुलतां नगरं गिरि भर्तुः ।
व्यग्रपुरन्ध्रिजनञ्जवियानं धावितमार्ग जनाकुलरथ्यम् ॥ ४७० ॥
हर्म्ये गवाक्षगतामर नारी लोचन नीलसरोरुहमालम् ।
सुप्रकटासम दृश्यत काचित्स्वाभरणां पविताम विगूढा ॥४७१॥
काप्यखिलीकृतमण्डनभूषात्यक्त सखी प्रणया हरमैक्षत् ।
काचिदुवाच कलङ्कृत मानाकातरतां सखिमाकुलमूढे॥४७२॥
दग्धमनोभव एव पिनाकी कामयते स्वयमेव विहर्तुम् ।
काचिदपि स्वयमेव पतन्ती प्राह परां विरहस्खलिताङ्गीम्४७३
माचपले मदनव्यतिषङ्गं शङ्करजं स्खलनेन वदत्वम् ।
कापि कृतव्यवधानम दृष्टा युक्तं वगाद्गिरिगोह्ययमूचे ॥४७४॥
एष सयत्र सहस्रमखाद्या नाक सदामधिपाः स्वयमुक्ताः ।
नामभिरिन्दुजटं निजमेवा प्राप्तिफलायनताम् घटन्ते॥४७५॥
एषनवेष स एष यदृध्येषम परीत तनुः शशिमौली ।
धावति वज्रधरोऽमर राजो मार्गममुं विहतो करणाय ॥४७६॥
एष स पद्मभवोऽग्य मुपेत्यप्रांशु जटा मृगचर्मनिगूढः ।
सप्रणयङ्कर घट्टित चक्रं किञ्चिदुवाच मितं श्रुति मूले ॥४७७॥
एवमभूत् सुरनारिकुलानां चित्तविसंष्ठुलता गुरुरागात् ।
यद्धरसं ययगाद्गिरि जायाजन्मफलं परमस्त्विति चोचुः ॥४७८॥
ततो हिमगिरेर्वेश्मविश्वकर्म्मनिवेदितम् ।

महानील मयस्तम्भं ज्वलत्काञ्चन कुट्टिमम् ॥४७९॥
मुक्ताजाल परिष्कारं ज्वलितौषधि दीपितम्।
क्रीड़ोद्यान सहस्राढ्यं काञ्चनाबद्धदीर्घिकम्॥ ४८०॥
महेन्द्र प्रमुखाः सर्वे सुराद्दृष्ट्वा तदद्भुतम्।
नेत्राणि सफलान्यद्य मनोभि रिति ते दधुः॥ ४८१॥
विमर्दकीर्णकेयूरा द्वारिणा द्वारिरोधिताः।
कथञ्चित् प्रमुखा स्तत्र त्रिविष्टपनाकवासिनः॥ ४८२॥
प्रणतेना चलेन्द्रेण पूजितोऽथ चतुर्मुखः।
चकार विधिना सर्वं विधिमन्त्र पुरः सरम्॥ ४८३॥
शर्वेण पाणिग्रहणमग्नि साक्षिक मच्युतम्।
दाता महीभृतान्नाथो होतादेवश्चतुर्मुखः॥ ४८४॥
वरः पशुपतिः साक्षात् कन्या विश्वारणिस्तथा।
चराचराणि भूतानि सुरासुर वराणिच॥ ४८५॥
तत्राप्येते नियमतो ह्यभवन्व्यक्तमूर्त्तयः।
मुर्त्ताश्चाभि नवान् सर्वान् सस्यशालीन् रसौषधीः॥४८६॥
व्यग्रातु पृथिवी देवी सर्वभाव मनोरमा।
गृहीत्वा वरुणः सर्वरत्नान्या भरणानि च॥ ४८७॥
पुण्यानि च पवित्राणि नानारत्नमयानि तु।
तस्थौ स्वाभरणो देवोहर्षदः सर्वदेहिनाम्॥ ४८८॥
धनदश्चापि दिव्यानिहैमान्या भरणानि च।
जात रूपविचित्राणि प्रयतः समुपस्थितः॥ ४८९॥
वायुर्ववौसुसुरभिः सुखसंस्पर्शनो विभुः।
छत्रमिन्दु करोद्गारं सुसितञ्च शतक्रतुः॥ ४९०॥
जग्राह मुदितः स्रग्वी बाहुभिर्वहु भूषणैः।

जगुर्गन्धर्वमुख्याश्च ननृतुश्चाप्सरोगणाः ॥ ४८१ ॥
वाद्यन्तोऽति मधुरं जगुर्गन्धर्वकिन्नराः ।
मूर्त्ताश्च ऋतवस्तत्र जगुश्च ननृतुश्च वै ॥ ४८२ ॥
चपलाश्च गणास्तस्थुर्लोलयन्तो हिमाचलम् ।
उत्तिष्ठन् क्रमशश्चात्र विश्वभुग्भगनेत्रहा ॥ ४८३ ॥
चकारौद्वाहिकं कृत्यं पत्न्या सह यथोचितम् ।
दत्तार्घो गिरिराजेन सुरवृन्दैर्विनोदितः ॥ ४८४ ॥
अवसत् तां क्षपान्तत्र पत्न्या सह पुरान्तकः ।
ततो गन्धर्वगीतेन नृत्येनाप्सरसामपि ॥ ४८५ ॥
स्तुतिभिर्देव दैत्यानां विबुधो विबुधाधिपः ।
आमन्त्र्य हिमशैलेन्द्रं प्रभाते चोमया सह ।
जगाम मन्दरगिरिं वायुवेगेन शृङ्गिणा ॥ ४८६ ॥

ततो गते भगवति नीललोहिते
सहोमया रतिमलभन्नभूधरः ।
सबान्धवो भवति च कस्य नो मनो
विह्वलञ्च जगति हि कन्यकापितुः ॥ ४८७ ॥
ज्वलन्मणि स्फटिकहाटकोत्कटम्
स्फुटद्युति स्फटिक गोपुरं पुरम् ।
हरोगिरौ चिरमनु कल्पितस्तदा
विसर्जितामरनिवहोऽविगतस्वकम् ॥ ४८८ ॥

ततोमासहितो देवो विजहार भगाक्षिहा ।
पुरोद्यानेषु रम्येषु विविक्तेषु वनेषु च ॥ ४८९ ॥
सुरक्त हृदयो देव्या मकराङ्क पुरः सरः ।
ततो बहुतिथे काले सुतकामा गिरेः सुता ॥ ५००

सखीभिः सहिता क्रीडां चक्रे कृत्रिम पुत्रकैः।
कदाचिद्गन्ध तैलेन गात्रमभ्यज्य शैलजा ॥ ५०१ ॥
चूर्णैरुद्वर्तयामास मलिनां तरितान्तनुम्।
तदुद्वर्तनकं गृह्य नरं चक्रे गजाननम् ॥ ५०२ ॥
पुत्रकं क्रीडतो देवी तं चाक्षिपयदम्भसि।
जाह्नव्यास्तु शिवासख्या स्ततः सोऽभूद्बृहत् वपुः॥५०३॥
कायेनाति विशालेन जगदा पूरयत्तदा।
पुत्रेत्युवाच तं देवी पुत्रेत्यूचे च जाह्नवी ॥५०४॥
गाङ्गेय इति देवैस्तु पूजितोऽभूद्गजाननः।
विनाय काधिपत्यञ्च ददावस्य पितामहः ॥ ५०५ ॥
पुनः सा क्रीडनं चक्रे पुत्रार्थं वरवर्णिनी।
मनोज्ञमङ्कुरं रूढ मशोकस्य शुभानना ॥ ५०६ ॥
वर्द्धयामास तं चापि कृत संस्कारमङ्गला।
बृहस्पति मुखै विप्रैर्दिवस्पति पुरोगमैः ॥ ५०७ ॥
ततो देवैश्च मुनिभिः प्रोक्ता देवी त्विदम्वचः।
भवानि भवतीभव्या संभूता लोकभूयते ॥ ५०८ ॥
प्रायः सुतफलो लोकः पुत्रपौत्रैश्च लभ्यते।
अपुत्राश्च प्रजाः प्रायो दृश्यन्ते देव हेतवः ॥ ५०९ ॥
अधुनादर्शिते मार्गे मर्यादां कर्तुमर्हसि।
फलं किम्भविता देवि ! कल्पितैस्तरु पुत्रकैः॥ ५१० ॥
इत्युक्ता हर्षपूर्णाङ्गी प्रोवाचोमा शुभाङ्गिरम्।
देव्युवाच। एवं निरुदके देशे यः कूपं कारयेद्बुधः॥५११ ॥
बिन्दौ बिन्दौ च तोयस्य वसेत् सम्वत्सरन्दिवि।
दशकूप समा वापी दशवापी समोह्रदः ॥ ५१२ ॥

दशह्रद समः पुत्रो दशपुत्र समो द्रुमः ।
एषैव ममम‌र्यादा नियता लोकभाविनी ॥ ५१३ ॥
इत्युक्तास्तु ततोविप्रा बृहस्पति पुरोगमाः ।
जग्मुःस्वमन्दिराण्येव भवानीं वन्द्य सादरम् ॥५१४॥
गतेषु तेषु देवोऽपि शङ्करः पर्वतात्मजाम् ।
पाणिना लम्बमानेन शनैः प्राविशयच्छुभाम् ॥ ५१५ ॥
चित्तप्रसाद जननं प्रासाद मनुगोपुरम् ।
लम्बमौक्तिक दामानं मालिका कुलवेदिकम् ॥ ५१६ ॥
निर्धौत कलधौत चक्रोडा गृहमनोरमम् ।
प्रकीर्ण कुसुमोद्दाम मत्तालिकुलकूजितम् ॥ ५१७ ॥
किन्नरोद्गीतसङ्गीत गृहान्तरित भित्तिकम् ।
सुगन्धिधूपसङ्घातमनः प्रार्थ्यमलङ्कृतम् ॥ ५१८ ॥
क्रीडन्मयूर नारीभिर्वृतं वै ततवादिभिः ।
हंससङ्घात संवुष्टं स्फाटिकस्तम्भवेदिकम् ॥ ५१९ ॥
अनारतमपि प्रोत्या वहुशःकिन्नरा कुलम् ।
शुकैर्यत्राभिहन्यन्ते पद्मराग विनिर्मिताः ॥ ५२० ॥
भित्तयो दाडिमभ्रान्त्या प्रति विम्बितमौक्तिकाः ।
तत्रावक्रीडयादेवो विहर्तुं नृप चक्रमे ॥ ५२१ ॥
स्वच्छेन्दनोन्नभभागे गौरीं न यत्र धिष्ठितो ।
वपुः सहायतां प्राप्तौ विनोदरसनिर्वृतौ ॥ ५२२ ॥
एवं प्रक्रीडतो स्तत्र देवोगङ्करयो स्तदा ।
प्रादुर्भवन्महाशब्दस्तद्गोहर गोचरः ॥ ५२३ ॥
तच्छ्रुत्वा कौतुकाद्देवी किमेतदिति शङ्करम् ।
पप्रच्छ तं शुभतनुर्हरं विस्मय पूर्वकम् ॥ ५२४ ॥

उवाच देवीं नैतत्ते दृष्टपूर्वं सुविस्मिते ! ।
एते गणेशाः क्रीडन्ते शैलेऽस्मिन् मत्प्रियाः सदा॥५२५॥
तपसा ब्रह्मचर्य्येण नियमैः क्षेत्रसेवनैः ।
यैरहं तोषितः पूर्वं त एते मनुजोत्तमाः ॥ ५२६ ॥
मत्समीप मनु प्राप्ता मम हृद्याः शुभानने ! ।
कामरूपा महोत्साहा महारूपगुणान्विताः ॥५२७॥
कर्मभिर्विस्मयं तेषां प्रयामि बलशालिनाम् ।
सामरस्यास्य जगतः सृष्टिसंहरणक्षमाः ॥ ५२८ ॥
ब्रह्मविष्ण्विन्द्र गन्धर्वैः स किन्नर महोरगैः ।
विवर्जितोऽपरहं नित्यन्त्वेभिर्विरहितो रमे ॥ ५२९ ॥
हृद्या मे चारु सर्वाङ्गास्त एते क्रीडते गिरौ ।
इत्युक्ता तु ततो देवी त्यक्ता तद्विस्मयाकुला ॥ ५३०॥
गवाक्षान्तरमासाद्य प्रेक्षते विस्मितानना ।
यावन्तस्ते कृशा दीर्घा ह्रस्वा स्थूला महोदराः॥५३१॥
व्याघ्रेभवदनाः केचित् केचिन्मेषाजरूपिणः ।
अनेक प्राणिरूपाश्च ज्वालास्याः कृष्णपिङ्गलाः ॥५३२॥
सौम्या भीमाः स्मितमुखाः कृष्णपिङ्गजटासटाः ।
नानाविहङ्गवदना नानाविध मृगाननाः ॥ ५३३ ॥
कौशेय चर्म्मवसना नग्नाश्चान्ये विरूपिणः ।
गोकर्णा गजकर्णाश्च बहुवक्त्रे क्षणोदराः ॥ ५३४ ॥
बहुपादा बहुभुजा दिव्य नानास्त्रपाणयः ।
अनेक कुसुमा पीडा नानाव्यालविभूषणाः ॥ ५३५ ॥
वृत्ताननायुधधरा नाना कवचभूषणाः ।
विचित्रवाहनारूढा दिव्यरूपा वियच्चराः ॥ ५३६ ॥

वीणा वाद्यरवाघुष्टा नानाख्यानकनर्त्तकाः ।
गणेशांस्तांस्तथा दृष्ट्वा देवी प्रोवाच शङ्करम् ॥ ५३७॥
देव्युवाच । गणेशाः कतिसङ्ख्याताः किं नामानः किमात्मकाः ।
एकैकशो मम ब्रूहि्यधिष्ठिता ये पृथक् पृथक् ॥५३८॥
शङ्कर उवाच । कोटिसङ्ख्या ह्यसङ्ख्याता नानाविख्यात पौरुषाः ।
जगदापूरितं सर्वैरेभिर्भीमै महाबलैः ॥ ५३९ ॥
सिद्धक्षेत्रेषु रथ्यासु जीर्णोद्यानेषु वेश्मसु ।
दानवानां शरीरेषु बालेषून्मत्तकेषु च ॥ ५४० ॥
एते विशन्ति मुदिता नानाहार विहारिणः ।
ऊष्मपाः फेनपाश्चैव धूमपा मधुपायिनः ॥ ५४१ ॥
रक्तपाः सर्वभक्षाश्च वायुपा ह्यम्बु भोजनाः ।
गेय नृत्योपहाराश्च नानावाद्यरवप्रियाः ॥ ५४२ ॥
न ह्येषां वै अनन्तत्वाद्गुणान् वक्तुं हि शक्यते ।
देव्युवाच । मार्गत्वगुत्तरासङ्गः शुद्धाङ्गो मुञ्जमेखली ॥ ५४३॥
ताम्रस्येन च शिक्येन चपलो रञ्जिताननः ।
मृगदंष्ट्रो ह्युत्पलानां स्रग्दामो मधुराकृतिः ॥ ५४४ ॥
पाषाणशकलोत्तान कांस्य तालप्रवर्तकः ।
असौ गणेश्वरो देव ! किन्नामा किन्नरानुगः ॥ ५४५॥
य एष गण गीतेषु दत्तकर्णो मुहुर्मुहुः ।
शर्व उवाच । स एष वीरको देवि ! सदा मद्हृदय प्रियः ॥५४६
नानाश्चर्य्यगुणाधारो गणेश्वर गणार्चितः ।
देव्युवाच । ईदृशस्य सुतस्यास्ति ममोत्कण्ठा पुरान्तक! ५४७
कदाहमीदृशं पुत्रं द्रक्ष्याम्या नन्ददायिनम् ।
शर्व उवाच । एष एव सुतस्तेऽस्तु नयानन्दकेतुकः ॥ ५४८॥

त्वया माता कृतार्थस्तु वीरकोऽपि सुमध्यमे!।
इत्युक्ता प्रेषयामास विजयां हर्षणोत्सुका ॥५४९॥
वीरकानयनायाशु दुहिता हिमभूभृतः।
सावरुह्य त्वरायुक्ता प्रासादादम्बरस्पृशः ॥५५०॥
विजयोवाच गणपङ्क्तिमध्ये प्रवर्तिता।
विजयोवाच। एहि वीरक! चापल्यात् त्वया देवः प्रकोपितः॥५५१॥
किमुत्तरं वदत्यर्थं नृत्यरङ्गे तु शैलजा।
इत्युक्तस्त्यक्त पाषाण शकलो मार्जिताननः ॥५५२॥
आहूतस्तु तयोद्भूतमूलप्रस्तावशंसकः।
देव्याः समीपमागच्छज्जयया नुगतः शनैः ॥५५३॥
प्रासाद शिखरात्फुल्ल रक्ताम्बुजनिभद्युतिः।
तं दृष्ट्वा प्रस्रुतानल्पस्वादुक्षीरपयोधरा।
गिरिजोवाच सस्नेहं गिरा मधुरवर्णया ॥५५४॥

अथ गद्यानि।

उमोवाच। एह्येहि यातोऽसि मे पुत्रतां देव देवेन दत्तोऽधुना वीरक! ॥५५५॥ इत्येव मङ्के निधायाथ तं पर्यष्वजत् कपोले कलवादिनम् ॥५५६॥ मूर्ध्न्युपाघ्राय संमार्ज्य गात्राणि भूषयामास दिव्यैः स्वयंभूषणैः किङ्किणी मेखलानूपुरैर्माणिक्य केयूरहारोर्म्मिलगुणैः॥५५७॥कामलैः पल्लवैश्चित्रितैश्चारुभिर्दिव्यमन्दारपुष्पैस्ततः शुभैस्ततो भूरिभिश्चाकरोन्मिश्र सिद्धार्थकैर्ष्णुरक्षाविधिः॥५५८॥ एवमादाय चोवाच कृत्वासं मूर्ध्नि गौरीघनां पत्रभङ्गोज्ज्वलैः॥५५९॥ गच्छ गच्छाधुना क्रीडसार्द्धं कुमारैः प्रमत्तोवसं श्वभ्रवर्जी शनै र्व्यालमालाकुला शैलसानुद्रुमदन्तिभिर्भिन्नसाराः परेसङ्गिनः॥५६०॥जाह्नवीयं जलं हुन्ध तोया

कुलम् कूलं माविशीथा बहुश्वापद दुष्टे वने ॥५६१॥वत्सा संख्येषु दुर्गागणेष्वेवे तस्मिन् वीरके पुत्रभावोऽत्र तुष्टान्तः करणातिष्ठ तु॥५६२॥स्वस्य पितृजन प्रार्थितं भवत्माया निभाविन्द्यसीभवता५६३सोऽपि निभृत्य सर्वगणैः सस्मय माह बालत्व लीलारसाविष्टधीः ॥५६४॥ एषमाला स्वयं मे कृतभूषणाऽत्र एषपटः पटलैर्बिन्दुभिः सिन्दुवारस्य पुष्पैरियं मालतीमिश्रितामालिका मे शिरस्याहृता ॥५६५॥ कोऽयमार्ताद्यधारीगणस्तस्य दास्यामि हस्तादिदं क्रीडनम्५६६दक्षिणात् पश्चिमं पश्चिमादुत्तरमुत्तरात् पूर्वमभ्येत्य सख्या युता प्रेक्षता तं गवाक्षान्तराद्वीरकं शैल पुत्री बहिः क्रीडनं यज्जगन्मातुरेष चित्तभ्रमः ॥ ५६७ ॥ पुत्रलुब्धो जनस्तर्कां मोहमायाति न स्वल्पचेताजडोमांस विक्रम समुत्पातदेह॥५६८ दृष्ट्वा मभ्यन्तरद्वारक वासे-स्वरेरिन्दुमौलिं प्रविष्टे पु कृतान्तरम्॥५६९॥वाहनात्यावरोहा गणास्तं युतालोकपालाश्च मृत्योऽयं खड्गो विचक्रकानिर्मम: कृतान्तः कस्यकिनाक्षतो नूतमौनिभवन्तोऽस्त दण्डन किं दुस्पृहा॥५७०॥ भोऽम शानने नास्ति कृत्यविरोध एषोऽवश्य न किं वध्यते॥५७१॥मातृया लोकपालानुगविक्तता एव भवतद्दित्यनुचरम्भीं तदा देवता:॥५७२॥देवदेवानुगम्वीरकं लक्षणाप्राह देवी वनंपर्वतानिभ्रंराग्यग्निर्देवतान्यथो भूतपानिभ्रराश्मोनिपातेपु निमज्जत५७३पुष्पजालावनडेपु धामस्वपिशेत प्रसुप्तनामाद्रिकुञ्जेष्व नुगर्जन्तु के मारुतां स्फोटसंक्षेपणात् कामतः॥ ५७४॥काञ्चनोत्तुङ्ग शृङ्गावरोहासितो हेमरेणूत्करासङ्गद्युतिम्। खेचराणां वनाधायिनि रम्ये बहुरूपसम्पत् प्रकरैर्गणान्वासितम् मन्दरकन्दरे सुन्दर मन्दार पुष्पप्रवालाम्बुजे सिद्ध-

नारीभिरापीतरूपामृतं विस्तृतैर्नेत्रपात्रैरनुत्मेषिभिर्वीरकं शैलपुत्री निमेषान्तरादस्मरत् पुत्रमग्ना विनोदार्थिनी ॥५७५॥ सोऽपि तादृक् क्षणावाप्तपुण्योदयो योऽपि जन्मान्तरस्यात्मजत्वङ्गतः ॥ ५७६ ॥ क्रीडतस्तस्य तृप्तिः कथं जायते योऽपि भाविजगद्वेधसा तेजसः कल्पितः प्रतिक्षणं दिव्यगीतक्षणो नृत्यलोलो गणेशैः स्वप्रणत्यक्षणः सिंहनादाकुले गण्डशैले ऽम्बुजद्रत्नजाले वृहत्सालताले क्षणे फुल्लनानातमालालिकाले क्षणं वृक्षमूले विलोलोमराले क्षणे स्वल्पपङ्किजन्ये पङ्कजाढ्ये क्षणं मातुरङ्के शुभे निष्कलङ्के ॥ ५७७ ॥ परिक्रीडति बाललीलाविहारी गणेशाधिपो देवतानन्दकारी।

निकुञ्जेषु विद्याधरैर्गीतशीलः

पिनाकीव लीलाविलासैः सलीलः ॥ ५७८ ॥

प्रकाश्य भुवनाभोगी ततो दिनकरे गते।

देशान्तरं तदा पश्चाद्दूरमस्तावनीश्वरम् ॥ ५७९ ॥

उदयास्ते पुराभावी यो हि चास्तेऽवनीश्वरः।

मित्रत्वमस्य सुदृढं हृदये परिचिन्त्यताम् ॥५८०॥

नित्यमाराधितः श्रीमान् पृथुमूलः समुन्नतः।

नाकरोत् स्थितिं मित्र रूपहारं पतिष्यतः ॥ ५८१ ॥

इतिश्ये मा व्यवस्थेति संश्रयेणाखिलं बुधः।

दिनान्तानुगता भानुः स्वजनत्वमपूरयत् ॥ ५८२ ॥

सन्ध्यावद्धाञ्जलिपुटा मुनयोऽभिमुखा रविम्।

याचन्त्यागमनं भीताः निवार्यात्मनि भाविताम् ॥५८३॥

अजृम्भदथ लोकेऽस्मिन् क्रमाद्विभावरीतमः।

कुटिलस्येव हृदये कालुष्यन्दूषयन्मन: ॥ ५८४ ॥
ज्वलत्फणिफणारत्नदीपोद्योतितभित्तिके ।
शयनं शशिसङ्घातशुभ्रवस्त्रोत्तरच्छदम् ॥ ५८५ ॥
नानारत्नद्युतिलसच्छक्रचापविडम्बकम् ।
रत्नकिङ्किणिकाजालं लम्बमुक्ताकलापकम् ॥ ५८६ ॥
कमनीयचलल्लोलवितानाच्छादिताम्बरम् ।
मन्दिरे मन्दसञ्चार: शनैर्गिरिसुतायुत: ॥ ५८७ ॥
तस्थौ गिरिसुताबाहुलतामीलितकन्धर: ।
शशिमौलिसितज्योत्स्नाशुचिपूरितगोचर: ॥ ५८८ ॥
गिरिजाप्यसितापाङ्गी नीलोत्पलदलच्छवि: ।
विभावर्या च संपृक्ता बभूवातितमोमयी ।
तामुवाच ततो देव: क्रीडाकेलिकलायुतम् ॥ ५८९ ॥

---

अथ चतु:पञ्चाशदधिकशततमोऽध्याय: ।

सूत उवाच । शरीरे मम तन्वङ्गि ! सिते भास्यसितद्युति: ।
भुजङ्गीवासिता शुद्धा संश्लिष्टा चन्दने तरौ ॥ १ ॥
चन्द्रातपेन संपृक्ता रुचिराम्बरया तथा ।
रजनीवासितपक्षे दृष्टिदोषं ददासि मे ॥ २ ॥
इत्युक्ता गिरिजा तेन मुक्तकण्ठा पिनाकिना ।
उवाच कोपरक्ताक्षी भ्रुकुटीकुटिलानना ॥ ३ ॥
देव्युवाच । स्वकृतेन जन: सर्वो जाड्येन परिभूयते ।
अवश्यमर्थी प्राप्नोति खण्डनं शशिमण्डन ! ॥ ४ ॥

तपोभिर्दुर्विचरितैर्यच्च प्रार्थितवत्यहम् ।
तस्या मे नियतस्त्वेष ह्यवमानः पदे पदे ॥ ५ ॥
नैवास्मि कुटिला शर्व ! विषमा नैव धूर्जटे ! ।
स विषस्त्वङ्गतः ख्यातिं व्यक्तं दोषाकराश्रयात् ॥६॥
नाहं पूष्णोऽपि दशना नेत्रे चास्मि भगस्य हि ।
आदित्यश्च विजानाति भगवान् द्वादशात्मकः ॥ ७ ॥
मूर्ध्नि शूलं जनयसि स्वैर्दोषैर्मामधिक्षिपन् ।
यस्त्वं मामाह कृष्णेति महाकालेति विश्रुतः ॥८॥
यास्याम्यहं परित्यक्तुं चात्मानं तपसा गिरिम् ।
जीवन्त्या नास्ति मे कृत्यं धूर्तेन परिभूतया ॥ ९ ॥
निशम्य तस्या वचनं कोपतीक्ष्णाक्षरं भवः ।
उवाचाधिकसंभ्रान्तः प्रणयेनेन्दुमौलिना ॥ १० ॥
शर्व उवाच । अगात्मजासि गिरिजे ! नाहं निन्दापरस्तव ।
त्वद्भक्तिबुद्ध्या कृतवांस्तवाहं नामसंश्रयम् ॥ ११ ॥
विकल्पः स्वस्थचित्तेऽपि गिरिजे ! नैव कल्पना ।
यद्येवं कुपिता भीरु ! त्वन्तवाहन्नवै पुनः ॥ १२ ॥
नर्मवादी भविष्यामि जहि कोपं शुचिस्मिते ! ।
शिरसा प्रणतश्चाहं रचितस्ते मयाञ्जलिः ॥ १३ ॥
स्नेहेनाप्यवमानेन निन्दितेनैति विक्रियाम् ।
तस्मान्न जातु दुष्टस्य नर्मस्पृष्टो जनः किल ॥ १४ ॥
अनेकैः स्वादुभिर्देवी देवेन प्रतिबोधिता ।
कोपन्तीव्रन्न तत्याज सतो मर्मणि घट्टिता ॥ १५ ॥
अवष्टभ्य यथास्फाल्य वासः शङ्करपाणिना ।
विपर्यस्तालका वेगाद्यातुमैच्छत शैलजा ॥ १६ ॥

तस्या व्रजन्त्याः कोपेन पुनराह पुरान्तकः ।
सत्यं सर्वैरवयवैः सुतासि सदृशी पितुः ॥ १७ ॥
हिमाचलस्य शृङ्गैस्तैर्मेघजालाकुलैर्नभः ।
तथा दुरवगाहेभ्यो हृदयेभ्य स्तवाशयः ॥ १८ ॥
काठिन्याद्वहुस्त्वमश्मभ्यं वनेभ्यो बहुधा गता ।
कुटिलत्वञ्च वर्त्मभ्यो दुःसेव्यत्वं हिमादपि ॥ १९ ॥
संक्रान्तिं सर्वदेवैति तन्वङ्गि ! हिमशैलराट् ।
इत्युक्ता सा पुनः प्राह गिरिशं शैलजा तदा ॥ २० ॥
कोपकम्पितमूर्द्धा च प्रस्फुरद्दशनच्छदा ।
उमोवाच । मा सर्वान्दोषदानेन निन्दान्सान् गुणिनोजनान् ॥ २१ ॥
तवापि दुष्टसम्पर्कात् संक्रान्तं सर्वमेव हि ।
व्यालेभ्योऽधिकजिह्वत्वं भस्मना स्नेहबन्धनम् ॥ २२ ॥
हृत्कालुष्यं शशाङ्कात्तु दुर्बोधित्वं वृषादपि ।
तथा बहु किमुक्तेन अलं वाचा श्रमेण ते ॥ २३ ॥
श्मशानवासान्निर्भीत्वं नग्नत्वान्न तव त्रपा ।
निर्घृणत्वं कपालित्वाद्दया ते विगता चिरम् ॥ २४ ॥
इत्युक्त्वा मन्दिरात्तस्मान्निर्जगाम हिमाद्रिजा ।
तस्यां व्रजन्त्यां देवेशगणैः किलकिलाध्वनिः ॥ २५ ॥
क्व मातर्गच्छसि त्यक्त्वा रुदन्तो धाविताः पुनः ।
विष्टभ्य चरणौ देव्या वीरको बाष्पगद्गदम् ॥ २६ ॥
प्रोवाच मातः ! किन्त्वेतत् क्व यासि कुपिताम्बरा ।
अहं त्वा मनुयास्यामि व्रजन्तीं स्नेहवर्जिताम् ॥ २७ ॥
सोऽहं पतिष्ये शिखरात्तपोनिष्ठे त्वयोज्झितः ।
उन्नाम्य वदनं देवी दक्षिणेन तु पाणिना ॥ २८ ॥

उवाच वीरकं माता माशोकं पुत्र ! भावय ।
शैलायात् पतितुं नैव नचागन्तुं मया सह ॥ २९ ॥
युक्तन्ते पुत्र ! वक्ष्यामि येन कार्येण तच्छृणु ।
कृष्णेत्युक्ता हरेणाहं निन्दिता चाप्यनिन्दिता ॥३०॥
साहं तपः करिष्यामि येन गौरीत्वमाप्नुयाम् ।
एष स्त्रीलम्पटो देवो यातायां मय्यनन्तरम् ॥ ३१ ॥
द्वाररक्षा त्वया कार्य्या नित्यं रन्ध्रान्ववेक्षिणा ।
यथा न काचित् प्रविशेद्योषिदत्र हरान्तिकम् ॥३२ ॥
दृष्ट्वा परस्त्रियश्चात्र वदेथा मम पुत्रक ! ।
शीघ्रमेव करिष्यामि यथायुक्तमनन्तरम् ॥ ३३ ॥
एवमस्त्विति देवीं स वीरकः प्राह साम्प्रतम् ।
मातुराज्ञामृताह्लादप्लाविताङ्गो गतज्वरः ॥ ३४ ॥
जगाम कक्ष्यां संद्रष्टुं प्रणिपत्य च मातरम् ।

---

अथ पञ्चपञ्चाशदधिकशततमोऽध्यायः ।

सूत उवाच । देवीं सापश्यदायान्तीं सतीं मातुर्विभूषिताम् ।
कुसुमामोदिनीं नाम तस्य शैलस्य देवताम् ॥ १ ॥
सापि दृष्ट्वा गिरिसुतां स्नेहविक्लवमानसा ।
क्व पुत्रि ! गच्छसीत्युच्चैरालिङ्ग्योवाच देवता ॥ २ ॥
सा चास्यै सर्वमाचख्यौ शङ्करात् कोपकारणम् ।
पुनश्चोवाच गिरिजा देवतां मातृसम्मताम् ॥ ३ ॥
उमोवाच । नित्यं शैलाधिराजस्य देवता त्वमनिन्दिते ! ।

सर्वतः सन्निधानन्ते मम चातीवे वत्सला ॥ ४ ॥
अतस्तु ते प्रवक्ष्यामि यद्विधेयं तदा धिया ।
अन्यस्त्रीसंप्रवेशस्तु त्वया रक्ष्यः प्रयत्नतः ॥ ५ ॥
रहस्यत्र प्रयत्नेन चेतसा सततं गिरौ ।
पिनाकिनः प्रविष्टायां वक्तव्यं मे त्वयानघे! ॥ ६ ॥
ततोऽहं संविधास्यामि यत्कृत्यं तदनन्तरम् ।
इत्युक्ता सा तथेत्युक्त्वा जगाम स्वगिरिं शुभम् ॥ ७ ॥
उमापि पितुरुद्यानं जगामाद्रिसुता द्रुतम् ।
अन्तरिक्षं समाविश्य मेघमालामिव प्रभा ॥ ८ ॥
ततो विभूषणान्यस्य वृक्षवल्कलधारिणी ।
ग्रीष्मे पञ्चाग्निसन्तप्ता वर्षासु च जलोषिता ॥ ९ ॥
वन्याहारा निराहारा शुष्का स्थण्डिलशायिनी ।
एवं साधयती तत्र तपसा संव्यवस्थिता ॥ १० ॥
ज्ञात्वा तु तां गिरिसुतां दैत्यस्तत्रान्तरे वशी ।
अन्धकस्य सुतो दृप्तः पितुर्वधमनुस्मरन् ॥ ११ ॥
देवान् सर्वान् विजित्याजौ बकभ्राता रणोत्कटः ।
आडिर्नामान्तरप्रेप्सुः सततं चन्द्रमौलिनः ॥ १२ ॥
आजगामामररिपुः पुरन्त्रिपुरघातिनः ।
स तत्रागत्य ददृशे वीरकं द्वारवस्थितम् ॥ १३ ॥
विचिन्त्याभीदरं दत्तं सपुरा पद्मजन्मना ।
हते तदान्धके दैत्ये गिरिशेनामरद्विषि ॥ १४ ॥
आडिश्चकार विपुलं तपः परमदारुणम् ।
तमागत्याब्रवीद्ब्रह्मा तपसा परितोषितः ॥ १५ ॥
किमाडे! दानवश्रेष्ठ! तपसा प्राप्तुमिच्छति ।

ब्रह्माणमाह दैत्यस्तु निर्मृत्युत्वमहं वृणे॥ १६ ॥
ब्रह्मोवाच। न कश्चिच्च विना मृत्युं नरो दानव! विद्यते॥
यतस्ततोऽपि दैत्येन्द्र! मृत्युः प्राप्यः शरीरिणा ॥१७॥
इत्युक्तो दैत्यसिंहस्तु प्रोवाचाम्बुजसम्भवम्।
रूपस्य परिवर्तो मे यदा स्यात् पद्मसम्भव! ॥ १८॥
तदा मृत्युर्मम भवेदन्यथात्वमरोऽस्त्वहम्।
इत्युक्तस्तु तदोवाच तुष्टः कमलसम्भवः॥ १९ ॥
यदा द्वितीयो रूपस्य विवर्तस्ते भविष्यति।
तदा ते भविता मृत्युरन्यथा न भविष्यति॥ २० ॥
इत्युक्तोऽमरतां मेने दैत्यसूनुर्महाबलः।
तस्मिन् काले तु संस्मृत्य तद्वधोपायमात्मनः॥ २१॥
परिहर्तुं दृष्टिपथं वीरकस्याभवत्तदा।
भुजङ्गरूपी रन्ध्रेण प्रविवेश दृशः पथम्॥ २२ ॥
परिहृत्य गणेशस्य दानवोऽसौ सुदुर्जयः।
अलक्षितो गणेशेन प्रविष्टोऽथ पुरान्तकम्॥ २३ ॥
भुजङ्गरूपं सन्त्यज्य बभूवाथ महासुरः।
उमारूपी च्छलयितुं गिरिशं मूढचेतनः॥ २४ ॥
कृत्वा मायान्ततोरूपमप्रतर्क्यमनोहरम्।
सर्वावयवसंपूर्णं सर्वाभिज्ञानसंवृतम्॥ २५ ॥
कृत्वा मुखान्तरे दन्तान् दैत्योवज्रोपमान् दृढान्।
तीक्ष्णाग्रान् बुद्धिमोहेन गिरिशं हन्तुमुद्यतः ॥२६॥
कृत्वोमारूपसंस्थानं गतो दैत्यो हरान्तिकम्।
पापोरम्याकृतिश्चित्रभूषणाम्बरभूषितः॥ २७ ॥
तं दृष्ट्वा गिरिशस्तुष्टस्तदालिङ्ग्य महासुरम्।

मन्यमानो गिरिसुतां सर्वैरवयवान्तरैः ॥ २८ ॥
अपृच्छत् साधु ते भावो गिरिपुत्रि ! न कृत्रिमः ।
या त्वं मदाशयं ज्ञात्वा प्राप्तेह वरवर्णिनि ! ॥२९
त्वया विरहितं शून्यं मन्यमानो जगत्त्रयम् ।
प्राप्ता प्रसन्नवदना युक्तमेवं विधन्त्वयि ॥ ३० ॥
इत्युक्तो दानवेन्द्रस्तु तदा भाषत् स्मयं श्छनैः ।
नचाबुध्यदभिज्ञानं प्रायस्त्रिपुरघातिनः ॥ ३१ ॥
देव्युवाच । याताम्मह तपश्चर्तुं वनभ्यायतवातुलम् ।
रतिश्च तत्र मेनाभूत्ततः प्राप्ता त्वदन्तिकम् ॥ ३२ ॥
इत्युक्तः शङ्करः शङ्कां काञ्चित् प्राप्यावधारयन् ।
हृदयेन समाधाय देवः प्रहसिताननः ॥ ३३ ॥
कुपिता मयि तन्वङ्गी प्रकृत्या च दृढव्रता ।
अप्राप्तकामा संप्राप्ता किमेतत् संशयो मम ॥ ३४ ॥
इति चिन्त्य हरस्तस्या अभिज्ञानं विचारयन् ।
नापश्यद्वामपार्श्वे तु तदङ्गे पद्मलक्षणम् ॥ ३५ ॥
लोमावर्त्तन्तु रचितं ततो देवः पिनाकधृक् ।
अबुध्यद्दानवो माया माकारं गूहयंस्ततः ॥ ३६ ॥
मेढ्रे वज्रास्त्र मादाय दानवं तमघातयत् ।
अबुध्यद्वीरकोनैव दानवेन्द्रं निषूदितम् ॥ ३७ ॥
हरेण सूदितं दृष्ट्वा स्त्रीरूपं दानवेश्वरम् ।
अपरिच्छिन्नतत्त्वार्था शैलपुत्र्यै न्यवेदयत् ॥ ३८ ॥
दूतेन मारुतेनाशुगामिना नगदेवता ।
श्रुत्वा वायुमुखाद्देवी क्रोधरक्तविलोचना ।
अशपद्वीरकं पुत्रं हृदयेन विदूयता ॥ ३९ ॥

## अथ षट्पञ्चाशदधिकशततमोऽध्यायः ।

---

देव्युवाच । मातरं मां परित्यज्य यस्मात्त्वं स्नेहविक्लवात् ।
विहितावसरः स्त्रीणां शङ्करस्य रहोविधौ ॥ १ ॥
तस्मात्ते पुरुषा रूक्षा जडा हृदयवर्जिताः ।
गणेशश्चारसदृशो शिला माता भविष्यति ॥ २ ॥
निमित्तमेतद्विख्यातं वीरकस्य शिलोदये ।
सोऽभवत्प्रक्रमेणैव विचित्राख्यानसंश्रयः ॥ ३ ॥
एवमुत्सृष्टशापाया गिरिपुत्र्यास्त्वनन्तरम् ।
निर्जगाम मुखात् क्रोधः सिंहरूपो महाबलः ॥ ४ ॥
स तु सिंहः करालास्यो जटाजटिलकन्धरः ।
प्रोद्धूतलम्बलाङ्गूलो दंष्ट्रोत्कटमुखातटः ॥ ५ ॥
व्यावृत्तास्यो ललज्जिह्वः क्षामकुक्षिः शिरादिषु ।
तस्याशवर्तितुं देवी व्यवस्यत सती तदा ॥ ६ ॥
ज्ञात्वा मनोगतं तस्या भगवांश्चतुराननः ।
आगम्योवाच देवेशो गिरिजां स्पष्टया गिरा ।
ब्रह्मोवाच । किं पुत्रि ! प्राप्तुकामासि किमलभ्यं ददामि ते ॥ ७
विरम्यतामति क्लेशात्तपसोऽस्मान्मदाज्ञया ।
तच्छ्रुत्वोवाच गिरिजा गुरुगौरवगर्भितम् ॥ ८ ॥
वाक्यं वाचा चिरोद्गीर्णवर्णनिर्णीतवाञ्छितम् ।

देव्युवाच । तपसा दुष्करेणाप्तः पतित्वे शङ्करो मया ॥ १० ॥
स मां श्यामलवर्णेति बहुशः प्रोक्तवान् भवः ।
स्यामहं काञ्चनाकारा वाल्लभ्येन च संयुता ॥ ११ ॥
भर्तुर्भूतपते रङ्गमेकतो निर्विशेऽङ्गवत् ।
तस्यास्तद्भाषितं श्रुत्वा प्रोवाच कमलासनः ॥ १२ ॥
एवं भव त्वं भूयश्च भर्तृदेहार्द्धधारिणी ।
ततस्तस्याजभृङ्गाङ्गं फुल्लनीलोत्पलत्वचम् ॥ १३ ॥
त्वचा सा चाभवद्दीप्ता घण्टाहस्ताविलोचना ।
नानाभरणपूर्णाङ्गी पीतकौशेयधारिणी ॥ १४ ॥
तामब्रवीत्ततो ब्रह्मा देवीं नीलाम्बुजत्विषम् ।
निशे भूधरजा देहसम्पर्कात्त्वं ममाज्ञया ॥ १५ ॥
सम्प्राप्ता कृतकृत्यत्वमेकानंशापुराह्यसि ।
य एष सिंहः प्रोद्भूतो देव्याः क्रोधाद्वरानने ! ॥ १६ ॥
स तेऽस्तु वाहनं देवि ! केतौ चास्तु महाबलः ।
गच्छ विन्ध्याचलं तत्र सुरकार्यं करिष्यसि ॥ १७ ॥
पञ्चालो नाम यक्षोऽयं यक्षलक्षपदानुगः ।
दत्तस्ते किङ्करो देवि ! मया मायाशतैर्युतः ॥ १८ ॥
इत्युक्ता कौशिकी देवी विन्ध्यशैलं जगाम ह ।
उमापि प्राप्तसङ्कल्पा जगाम गिरिशान्तिकम् ॥ १९ ॥
प्रविशन्तीति तां द्वारि ह्यपकृष्य समाहितः ।
रुरोध वीरको देवीं हेमवेत्रलताधरः ॥ २० ॥
तामुवाच च कोपेन रूपात्तु व्यभिचारिणीम् ।
प्रयोजनं न तेऽस्तीह गच्छ यावन्न भेत्स्यसि ॥ २१ ॥
देव्या रूपधरो दैत्यो देवं वञ्चयितुं त्विह ।

प्रविष्टो न च दृष्टोऽसौ स वै देवेन घातितः॥ २२॥
घातिते चाहमाज्ञप्तो नीलकण्ठेन कोपिना।
द्वारेषु नावधानं ते यस्मात् पश्यामि वै ततः॥ २३॥
भविष्यसि नमद्द्वास्थो वर्षं पूगान्यनेकशः।
अतस्तेऽत्र न दास्यामि प्रवेशं गम्यतां द्रुतम्॥ २४॥

---

## अथ सप्तपञ्चाशदधिकशततमोऽध्यायः।

वीरक उवाच। एवमुक्ता गिरिसुता माता मे स्नेहवत्सला।
प्रवेशं लभते नान्या नारी कमललोचने!॥ १॥
इत्युक्ता तु तदा देवी चिन्तयामास चेतसा।
न सा नारीति दैत्योऽसौ वायुर्मे यामभाषत॥ २॥
वृथैव वीरकः शप्तो मया क्रोधपरीतया।
अकार्यं क्रियते मूढैः प्रायः क्रोधसमीरितैः॥ ३॥
क्रोधेन नश्यते कीर्तिः क्रोधो हन्ति स्थिरां श्रियम्।
अपरिच्छिन्नतत्त्वार्था पुत्रं शापितवत्यहम्॥ ४॥
विपरीतार्थबुद्धीनां सुलभो विपदोदयः।
सञ्चिन्त्यैव मुवाचेदं वीरकं प्रति शैलजा॥ ५॥
लज्जासज्जविकारेण वदनेनाम्बुजत्विषा।
देव्युवाच। अहं वीरक! ते माता मा तेऽस्तु मनसोभ्रमः।
शङ्करस्यास्मि दयिता सुता तु हिमभूभृतः।
मम गात्रच्छविभ्रान्त्या मा शङ्कां पुत्र! भावय॥ ६॥
तुष्टेन गौरता दत्ता ममेयं पद्मजन्मना।

मया शप्तोऽस्य विहिते ह्यकाले दैत्यनिर्मिते ॥ ८ ॥
ज्ञात्वा नारीप्रवेशन्तु शङ्करे रहसि स्थिते ।
न निवर्तयितुं शक्यः शापः किन्तु ब्रवीमि ते ॥ ९ ॥
शीघ्रमेष्यसि मानुष्यात् स त्वं कामसमन्वितः ।
शिरसा तु ततो वन्द्य मातरं पूर्णमानसः ।
उवाचार्चितपूर्णेन्दुद्युतिञ्च हिमशैलजाम् ॥ १० ॥

वीरक उवाच ।

नतसुरासुरमौलिमिलन्मणिप्रचयकान्तिकरालनखाङ्किते ।
नगसुते ! शरणागतवत्सले ! तव नतोऽस्मि नतार्त्तिविनाशिनि ॥
तपनमण्डलमण्डितकन्धरे !
पृथुसुवर्णसुवर्णनगद्युते ! ।
विषभुजङ्गनिषङ्गविभूषिते !
गिरिसुते ! भवतीमहमाश्रये ॥ १२ ॥
जगति कः प्रणताभिमतं ददौ झटिति सिद्धनुते भवती यथा ।
जगति काञ्चन वाञ्छति शङ्करो भुवनधृत्तनये ! भवतीं यथा ॥ १३ ॥
विमलयोगविनिर्मितदुर्जयस्वतनुतुल्यमहेश्वरमण्डले ! ।
विदलितान्धकबान्धवसंहतिः सुरवरैः प्रथमं त्वमभिष्टुता ॥ १४ ॥
सितसटापटलोद्धतकन्धराभरमहामृगराजरथास्थिता ।
विमलशक्तिमुखानलपिङ्गलायतभुजौघविपिष्टमहासुरा ॥ १५ ॥
निगदिता भुवनैरिति चण्डिका जननि ! शुम्भनिशुम्भनिषूदनी ।
प्रणतचिन्तितदानवदानवप्रमथनैकरतिस्तरसा भुवि ॥ १६ ॥
वियति वायुपथे ज्वलनोज्ज्वलेऽवनितले तव देवि ! च यद्वपुः ।
तदजितेऽप्रतिमे प्रणमाम्यहं भुवनभाविनि ! ते भववल्लभे ॥ १७ ॥
जलधयो ललितोद्धतवीचयो हुतवहद्युतयश्च चराचरम् ।

फणसहस्रभृतश्च भुजङ्गमास्त्वदभिधास्यति मय्यभयङ्कराः ॥१८॥
भगवति ! स्थिरभक्तजनाश्रये ! प्रतिगतो भवतीचरणाश्रयम् ।
करणजातमिहास्तु ममाचलं तिलवाप्तिफलाश्रयहेतुतः ।
प्रणममेहि ममात्मजवत्सले ! नमोऽस्तु ते देवि ! जगत्त्रयाश्रये ॥१९

सूत उवाच । प्रसन्ना तु ततो देवी वीरकस्येति संस्तुता ।
प्रविवेश शुभं भर्तुर्भवनं भूधरात्मजा ॥ २० ॥
द्वारस्थो वीरको देवान् हरदर्शनकाङ्क्षिणः ।
व्यसर्जयत् स्वकान्येव गृहाण्यादरपूर्वकः ॥ २१ ॥
नास्त्यत्रावसरो देवा देव्या सह वृषाकपिः ।
निभृतः क्रीडतीत्युक्ता ययुस्ते च यथागतम् ॥ २२ ॥
गते वर्षसहस्रे तु देवास्त्वरितमानसः ।
ज्वलनं चोदयामासुर्ज्ञातुं शङ्करचेष्टितम् ॥ २३ ॥
प्रविश्य जालरन्ध्रेण शुकरूपी हुताशनः ।
ददृशे शयने शर्वं रतं गिरिजया सह ॥ २४ ॥
ददृशे तञ्च देवेशो हुताशं शुकरूपिणम् ।
तमुवाच महादेवः किञ्चित् कोपसमन्वितः ॥ २५ ॥
यस्मात्तु त्वत्कृतोविघ्नस्तस्मात्त्वय्युपपद्यते ।
इत्युक्तः प्राञ्जलिर्वह्नि रपिबद्वीर्यमाहितम् ॥ २६ ॥
तेनापूर्यत तान्देवांस्तत्तत्कायविभेदतः ।
विपाट्य जठरन्तेषां वीर्यं माहेश्वरन्ततः ॥ २७ ॥
निष्क्रान्तं तप्तहेमाभं वितते शङ्कराश्रमे ।
तस्मिन् सरो महज्जातं विमलं बहुयोजनम् ॥२८॥
प्रोत्फुल्लहेमकमलं नानाविहगनादितम् ।

तच्छ्रुत्वा तु ततो देवी हेमद्रुममयाब्जकम् ॥ २९ ॥
तत्र कृत्वा जलक्रीड़ां तदम्बुरुमेश्वरा ।
उपविष्टा च तस्य तीरे देवी सखीयुता ॥ ३० ॥
पातुकामा च तत्तोयं स्वादु निर्मलपङ्कजम् ।
अपश्यन् कृत्तिकाः स्नाताः षडर्कद्युतिसन्निभम् ॥ ३१ ॥
पद्मपत्रे तु तद्वारि गृहीत्वोपस्थिता गृहम् ।
हर्षादुवाच पश्यामि पद्मपत्रे स्थितं पयः ॥ ३२ ॥
ततस्ता ऊचुरखिलं कृत्तिका हिमशैलजाम् ।
कृत्तिका ऊचुः । दास्यामो यदि ते गर्भः सम्भूतो यो भविष्यति ॥ ३३ ॥
सोऽस्माकमपि पुत्रः स्यादस्मन्नाम्ना च वर्त्तताम् ।
भवेल्लोकेषु विख्यातः सर्वेष्वपि शुभानने ॥ ३४ ॥
इत्युक्तोवाच गिरिजा कथं मद्गात्रसम्भवः ।
सर्वैरवयवैर्युक्तो भवतीभ्यः सुतो भवेत् ॥ ३५ ॥
ततस्तां कृत्तिका ऊचुर्विधास्यामोऽस्य वै वयम् ।
उत्तमान्युत्तमाङ्गानि यद्येवन्तु भविष्यति ॥ ३६ ॥
उक्ता वै शैलजा प्राह भवत्वेवमनिन्दिताः ।
ततस्ता हर्षसम्पूर्णाः पद्मपत्रस्थितं पयः ॥ ३७ ॥
तस्यै ददुस्तया चापि तत्पीतं क्रमशो जलम् ।
पीते तु सलिले तस्मिंस्ततस्तस्मिन् सरोवरे ॥ ३८ ॥
विपाट्य देव्यास्तु ततो दक्षिणां कुक्षिमुद्गतः ।
निश्चक्रामाद्भुतो बालः सर्वलोकविभासकः ॥ ३९ ॥
प्रभाकरप्रभाकारः प्रकाशकनकप्रभः ।
गृहीतनिर्मलोदग्रशक्तिशूलः षडाननः ॥ ४० ॥
दीप्तो मारयितुं दैत्यान् कुत्सितान् कनकच्छविः ।

एतस्मात् कारणाद्देवः कुमारश्चापि सोऽभवत् ॥ ४१ ॥

---

## अथाष्टपञ्चाशदधिकशततमोऽध्यायः।

सूत उवाच। वामं विदार्य निष्क्रान्तः सुतो देव्याः पुनः शिशुः।
स्कन्दाश्च वदने वह्नेः शुक्रात् सुवदनोऽग्निहा ॥ १ ॥
कृत्तिकामिलनादेव शाखाभिः सविशेषतः।
शाखाभिधाः समाख्याताः षट्सु वक्त्रेषु विस्तृताः ॥ २
यतस्ततो विशाखोऽसौ ख्यातो लोकेषु षण्मुखः ॥
स्कन्दो विशाखः षड्वक्त्रः कार्त्तिकेयश्च विश्रुतः ॥ ३ ॥
चैत्रस्य बहुले पक्षे पञ्चदश्यां महाबलौ।
संभूतावर्कसदृशौ विशाले शरकानने ॥ ४ ॥
चैत्रस्यैव सिते पक्षे पञ्चम्यां पाकशासनः।
बालकाभ्याञ्चकारैकं मत्वा चामरभूतये ॥ ५ ॥
तस्यामेव ततः षष्ठ्या मभिषिक्तो गुहः प्रभुः।
सर्वैरमरसङ्घातैर्ब्रह्मेन्द्रोपेन्द्रभास्करैः ॥ ६ ॥
गन्धमाल्यैः शुभैर्धूपैस्तथा क्रीडनकैरपि।
छत्रैश्चामरजालैश्च भूषणैश्च विलेपनैः ॥ ७ ॥
अभ्यर्चितो विधानेन यथावत्षण्मुखः प्रभुः।
सुतामस्मै ददौ शक्रो देवसेनेति विश्रुताम् ॥ ८ ॥
पत्न्यर्थं देवदेवस्य ददौ विष्णुस्तदायुधान्।
यक्षाणां दशलक्षाणि ददावस्मै धनाधिपः ॥ ९ ॥
ददौ हुताशनस्तेजो ददौ वायुश्च वाहनम्।
ददौ क्रीडनकन्त्वष्टा कुक्कुटं कामरूपिणम् ॥ १० ॥

एवं सुरास्ते सर्वे परिवारमनुत्तमम् ।
ददृशुर्दितचेतस्काः स्कन्दायादित्यवर्चसे ॥ ११ ॥
जानुभ्यामवनौ स्थित्वा सुरसङ्घास्तमस्तुवन् ।
स्तोत्रेणानेन वरदं षण्मुखं मुख्यशः सुराः ॥ १२ ॥

देवा ऊचुः ।

नमः कुमाराय महाप्रभाय स्कन्दाय च स्कन्दितदानवाय ।
नवार्कविद्युद्द्युतये नमोऽस्तु नमोस्तु ते षण्मुख कामरूप ॥ १३ ॥
पिनद्धनानाभरणाय भर्त्रे नमो रणे दारुणदारुणाय ।
नमोऽस्तु तेऽर्कप्रतिमप्रभाय नमोऽस्तु गुह्याय गुहाय तुभ्यम् ॥ १४ ॥
नमोऽस्तु त्रैलोक्यभयापहाय नमोऽस्तु ते बाल ! कृपापराय ।
नमो विशालामललोचनाय नमो विशाखाय महाव्रताय ॥ १५ ॥
नमो नमस्तेऽस्तु मनोहराय नमो नमस्तेऽस्तु रणोत्कटाय ।
नमो मयूरोज्ज्वलवाहनाय नमोऽस्तु केयूरधराय तुभ्यम् ॥ १६ ॥
नमो धृतोदग्रपताकिने नमोनमः प्रभावप्रणताय तेऽस्तु ।
नमोनमस्ते वरवीर्यशालिने क्रियापराणां भवभवग्रमूर्तये ॥ १७ ॥
क्रियापरा यज्ञपतिश्च स्तुत्वा विरेमुरेव त्वमराधिपाद्याः ।
एवं तदा षड्वदनस्तु सेन्द्रामुदा सुतुष्टश्च गुहस्ततस्तान् ।
निरीक्ष्य नेत्रैरमरैः सुरेशान् शत्रून् हनिष्यामि गतज्वराः स्थ ॥ १८
कुमार उवाच । कं वः कामं प्रयच्छामि देवता ! ब्रूत निर्वृताः ।
यद्यप्यसाध्यं हृद्यं वो हृदये चिन्तितम्परम् ॥ १९ ॥
श्रुत्युक्तास्तु सुरास्तेन नत्वा प्रणतमौलयः ।
सर्वएव महात्मानं गुहं तद्गतमानसाः ॥ २० ॥
दैत्येन्द्रस्तारकोनाम सर्वामरकुलान्तकृत् ।
बलवान् दुर्जयोदुष्टो दुराचारोऽतिकोपनः ॥ २१ ॥

तमेव जहि हर्य्योऽर्थ एषोऽस्माकं भयापह!।
एवमुक्तस्तथेत्युक्त्वा सर्वामरपदानुगः॥ २२॥
जगाम जगतां नाथ स्तूयमानोऽमरेश्वरैः।
तारकस्य वधार्थाय जगतः कण्टकस्य वै॥ २३॥
ततश्च प्रेषयामास शक्रोलब्धसमाश्रयः।
दूतं दानवसिंहस्य परुषाक्षरवादिनम्॥ २४॥
स तु गत्वाब्रवीद्दैत्यं निर्भयो भीमदर्शनः।
दूत उवाच। शक्रस्त्वामाह देवेशो दैत्यकेतो! दिवस्पतिः॥२५
तारकासुर! तच्छ्रुत्वा घट शक्त्या यथेच्छया।
यज्जगद्दलनादाप्तं किल्विषं दानव! त्वया॥ २६॥
तस्याहं शासकस्तेऽद्य राजास्मि भुवनत्रये।
श्रुत्वैतद्दूतवचनं कोपसंरक्तलोचनः॥ २७॥
उवाच दूतं दुष्टात्मा नष्टप्रायविभूतिकः।
तारक उवाच। दृष्टं ते पौरुषं शक्र! रणेषु शतशो मया॥२८॥
निस्त्रपत्वान्न ते लज्जा विद्यते शक्र! दुर्मते!।
एवमुक्ते गते दूते चिन्तयामास दानवः॥ २९॥
नालब्धसंश्रयः शक्रो वक्त्युमेवं हि चार्हति।
जितः स शक्रो नोऽकस्माज्जायते संश्रयाश्रयः॥ ३०॥
निमित्तानि च दुष्टानि सोऽपश्यद्दुष्टचेष्टितः।
पांसुवर्षमसृक्पातं गगनादवनीतले॥ ३१॥
भुजनेत्रप्रकम्पं च वक्त्रशोषं मनोभ्रमम्।
स्वकान्तावक्त्रपद्मानां म्लानताञ्च व्यलोकयत्॥ ३२॥
दुष्टांश्च प्राणिनो रौद्रान् सोऽपश्यद्दुष्टवेदिनः।
तदचिन्त्यैव दितिजोऽन्यस्तचिन्तोऽभवत् क्षणात्॥३३॥

